# चिन्तोः फेनकचयनम्




मैसूरुश्रीगन्ध-बालफेनकं श्रीगन्धवातामयोः तैलेन समृद्धम् अस्ति । चर्मणः आरोग्यस्य रक्षणाय नितराम् उपकारकम् एतत् ।









गतेभ्यः अशीतिवर्षेभ्यः श्रीगन्धस्य सुगन्धं गृहं गृहं प्रापयन्ती अस्ति मैसूरुश्रीगन्ध संस्था ।

# एतस्य अङ्कस्य विशेषाः सम्पुटः - १९ जनवरी - २००३ सञ्चिका - १०



पुराणकथावली २६



उत्तराधिकारी (वेतालकथा) १९

मायासरोवरः - १० ११



विघ्नेश्वरः ४५

## अन्तरङ्गम्






SUBSCRIPTION

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandamama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
**देहली -**
मोना भाटिया
Ph - 011-6515111/6565513/6565516
**मुम्बयी -**
शकीलमुल्ला
Ph - 022-2661599/2661946/2653057



संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# संरक्ष्यतां संवर्ध्यतां च मातृभाषा

समग्रे प्रपञ्चे ६,८००भाषाभिः लिख्यते, व्यवह्रियते च । युनेस्को अभिप्रैति यत् सहस्रवर्षाभ्यन्तरे एतासु ९०% भाषाः विलुप्ताः भवेयुः इति । भाषाः यथा यथा प्रवृद्धाः तथा तथा विविधाः संस्कृतयः अपि प्रवृद्धिं गताः इति विश्वासः अस्ति लोके ।

भारते त्रिंशदधिकभाषासु समृद्धं साहित्यम् अस्ति । पञ्चशताधिकाः भाषाः अत्र उपयुज्यन्ते दैनन्दिनव्यवहारे । सर्वे जनाः स्वमातृभाषाविषये विशेषप्रीतिमन्तः भवन्ति प्रायः ।

मातृभाषा मातापित्रोः सकाशात् सम्प्राप्यते । गच्छता कालेन तस्याः भाषायाः अनिर्वचनीयः कश्चन सम्बन्धः अभिवर्धते ।

भाषाः न केवलं संवहनसाधनानि, अपि तु ताः संस्कृत्याः वाहिकाः, जनानां सङ्गमनस्य कारणानि अपि ।

भाषाणां परस्परम् आदानप्रदानम् अतीव सहजम् । भारतीयभाषासु समानाः शब्दाः समानाः वाक्यसंरचनाः च दृश्यन्ते आधिक्येन । एतस्मात् एव जनेषु दृश्यते ऐक्यभावः । विविधाभिः भाषाभिः *चन्दमामा* प्रकाश्यमाना अस्ति यत् तस्य कारणम् अस्ति – एतस्यैव ऐक्यभावस्य वर्धनम् । भारतीयेषु बालेषु परस्परसौहार्दभावः वर्धेत इत्यस्ति अस्माकम् आकांक्षा । एषा तदा एव सफला स्यात् यदा च मातृभाषाः पोषिताः स्युः ।

मातृभाषायाः विषये अनास्थाप्रदर्शनम् अद्य आधुनिकताद्योतकं मन्यन्ते केचन । 'युनेस्को'संस्थया यथा अभ्यूहितं तथा अस्माकं मातृभाषाः मन्दमृतिं न प्राप्नुयुः । स्वस्य भाषायाः पोषणं संवर्धनं च अस्माकम् आद्यं कर्तव्यम् अस्ति ।

---

*सम्पादकः* – विश्वम्





भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१६

अत्र कांश्चन ऐतिहासिकनायकान् अधिकृत्य प्रश्नाः दत्ताः सन्ति । तेषाम् उत्तराणि जानन्तु ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. कुशानराजेषु अहम् एव श्रेष्ठः । बौद्धमतस्य प्रसारार्थं कार्यं कृतवता मया 'अपरः अशोकः' इति ख्यातिः प्राप्ता । अहं कः ?

   ..................................................

2. कावेरीनदीम् अवरुध्य मया महान् शिलासेतुः निर्मितः । मम नाम्नः शब्दानुवादः भवति - 'दग्धपादः' इति । मम नाम किम् ?

   ..................................................

3. मया क्रि. पू. ३२० तमे वर्षे मगधसिंहासनम् आरूढम् । मम साम्राज्यं बङ्गालखाततः अरेबियन्समुद्रपर्यन्तं प्रसृतम् आसीत् । मम नाम किम् ?

   ..................................................

4. अहं 'मैसूरुव्याघ्रः' इति ख्यातः । मया मैसूरुसंस्थाने कौशेयोद्यमस्य आरम्भः कृतः । मैसूरुराज्यस्य स्वावलम्बिता च परिकल्पिता । मम नाम किम् ?

   ..................................................

5. अहं १८०२ तमे वर्षे अमृतसरस्य हरिमन्दिरस्य उपरि सुवर्णपटस्थापनाय पञ्चलक्षं रूप्यकाणि दत्तवान् । मम नाम किम् इति किं भवन्तः जानन्ति ?

   ..................................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ..................................................

..................................................

..................................................

भागग्रहीतुः नाम ..................................................

वयः .................... कक्ष्या ....................

सङ्केतः ..................................................

..................................................

..................................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-१६**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, फेब्रवरी, २००३

### *नियमाः -*

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

*भवद्भ्यः पारितोषिकं ददाति*



एप्रिल् - २००२

अभिषेकः, चेन्नै
वि. आशुतोषः, मुम्बयी
बि. अनु, गुण्टूरु

मे - २००२

सौ. लिराबेन्, अमरेली
राजु करमरकरः, बङ्कुरा
सोनम् नागरः, उज्जैन्

जून् - २००२

अतुला, कोयम्बत्तूरु
आश्रय ढियोलीकरः, मुम्बयी
गोवर्धनसाहुः, भद्रक

जुलै - २००२

बि. ए. रघुनन्दनः, नलगोण्डा
रौल् तालुकदारः, गौहाती
कार्त्तिकशर्मा, कोट्टायम्

अगस्ट् - २००२

दीप्तिमान् बेहेरा, भुवनेश्वरम्
खितीश बिश्वालः, कोल्कत्ता
निर्बान बाबु, कटक्

सप्टम्बर् - २००२

आकाशदर्शपारेखः, मुम्बयी
आनन्दरामखरावतः, गोवा
गणेशः के.जे., कर्णाटकम्

# सङ्क्रान्तौ सूर्यदेवार्चनम्


Sri Suryanayana Moorthy

दक्षिणभारतीये तमिळुनाडुराज्ये आन्ध्र-कर्णाटकादिषु च पोङ्गल्पर्व महता वैभवेन आचर्यते । मकरसङ्क्रमणपर्वदिने सूर्यदेवस्य पूजा करणीया इति तु अस्माकं परम्परा । सूर्यदेवः ऊर्जायाः मूलम् इति परिगण्यते । अतः एव भारते बहवः सूर्यदेवालयाः दृश्यन्ते । तेषु सप्त देवालयाः अतिप्रमुखत्वेन परिगण्यन्ते ।

ते च प्रमुखाः देवालयाः - ओरिस्सास्थः कोणार्कीयः सूर्यदेवालयः, अरसविल्लीयः सूर्यनारायणस्वामिदेवालयः, गुजरातस्थः मोथेरीयः सूर्यदेवालयः, मध्यप्रदेशीयं ब्रह्मण्यदेवमन्दिरम्, असामीयं सूर्यपहारमन्दिरं, बिहारस्थः गयीयः दक्षिणार्कदेवालयः, तमिळुनाडीयं कुम्भकोणस्थं सूरियनारमन्दिरं च ।

अज्ञातप्रायाणि भारतीयानि स्थलानि

# सिमिलिपाल

विरामदिनानि अरण्यगन्धस्य आघ्राणाय यदि व्ययीकर्तुम् इच्छन्ति भवन्तः, पशुपक्षिणां मधुरकूजनं कलरवं वा यदि भवन्तः श्रोतुम् इच्छन्ति तर्हि ओरिस्साराज्यस्थं सिमिलिपालसंरक्षितारण्यं प्रति गमनाय मतिं कुर्वन्तु ।

समुद्रतलात् ९००मीटरुन्नते समतलप्रदेशे अस्ति सिमिलिपालारण्यम् । एतत् २७५० चतुरस्त्रकिलोमीटरात्मके प्रदेशे प्रसृतम् अस्ति । एवं सुविशाले प्रदेशे एतत् अस्तीत्यतः एतस्य विविधेषु भागेषु विविधं वातावरणं वृष्टिः च । अतः अत्र शुष्कः प्रदेशः यथा तथैव घनारण्यम् अपि द्रष्टुं शक्यम् ।

एतत् अरण्यं जीववैविध्यस्य खनी, वन्यजीविनां बहूनाम् आवासभूमिः व्याघ्रसन्ततिसंरक्षणस्थलं च अस्ति । अत्र १०७६ विधाः सस्यजातयः ८७ विधानि औषधीयसस्यानि, ४२ विधाः पशुजातयः, २९ विधाः सर्पादिजातयः, ३२१ विधाः पक्षिजातयः च अत्र सन्ति प्रायः । खैरिबुरुमेघसानिपर्वतोपत्यकानां सौन्दर्यं, बुधबलङ्गा-खैरी-सालन्दीप्रभृतीनां नदीनां रम्यविलासः इत्यादयः अपि सिमिलिपालप्रदेशे द्रष्टुं शक्याः ।



जशीपुरसमीपे स्थिते रामतीर्थप्रदेशे यत् मकरसन्ततिसंरक्षणकेन्द्रम् अस्ति तत् तु सर्वैः अपि यात्रिकैः अवश्यं द्रष्टव्यम् ।

## प्राप्तिमार्गः

सिमिलिपालप्रदेशः पुथबटातः (बरिपाडातः २२ कि.मी.दूरे स्थितात्) जशीपुरतः (बरिपाडातः १४ कि.मी.दूरे स्थितात्) वा गत्वा प्राप्तुं शक्यः । नवम्बर्मासतः जून्मासस्य मध्यभागं यावत् सिमिलिपालं प्रति गमनम् अनुमन्यते, न अन्यसमये ।

सिमिलिपालारण्यस्य प्रवेशाय अनुमतिपत्रम् आवश्यकम् । तच्च पुथबटातः जशीपुरात् वा केन्द्रात् वा प्राप्तुं शक्यम् ।



# मायासरोवरः

## १०

*[सर्पणख-सर्पसखौ जलाश्वम् आरुह्य वनवासिनां वसतेः समीपम् आगतौ । सर्पणखः तत्र कृपाणजितः कण्ठे पाशं क्षिप्त्वा तं गृहीतवान् । नरवानरः सर्पसखेन सह युद्धं कृत्वा तम् उन्नीय गतवान् । एतत् ज्ञात्वा जयशीलः सिद्धसाधकः च वसतिं प्रति प्रस्थितवन्तौ । एवं गमनसमये जलाश्वम् आरुह्य वेगेन आगच्छन् सर्पणखः ताभ्यां दृष्टः । तदनन्तरम् ....]*

सर्पणखः किञ्चित् अग्रे गत्वा कस्यचित् वृक्षस्य समीपे स्थित्वा सर्पसखं बहुधा आहूतवान् । किन्तु प्रत्युत्तरं किमपि न प्राप्तम् । तस्मात् सः नितरां हताशः जातः । स्वस्य असहायकताविषये एव तस्य क्रोधः आगतः ।

क्रोधावेशवशात् सः स्वकोषात् खड्गं निष्कास्य समीपस्थं वृक्षं तेन बलात् सकृत् प्रहृत्य - ''यदि अहं मम सहोदरं सजीवं द्रष्टुं न शक्नोमि तर्हि तम् अपहृतवन्तं नरवानरं तत्स्वामिनं च मम एतेन एव खड्गेन नूनं संहरिष्यामि । यावत् एतत् कार्यं न सम्पद्यते तावत् एतस्मात् प्रदेशात् अहं न निर्गमिष्यामि । एषा मम प्रतिज्ञा'' इति अवदत् ।

गुल्मानां पृष्ठतः निलीय स्थितः जयशीलः एतत् श्रुतवान् । सः सन्तोषेण सिद्धसाधकम् उक्तवान् - ''सिद्धसाधक ! श्रुता खलु भवता अपि सर्पणखस्य प्रतिज्ञा ? सः वृक्षाणां साक्षितया एतां कठोरप्रतिज्ञां कृतवान् अस्ति'' इति ।

''जयशील ! अग्रजस्य अप्राप्त्या तस्य



मानसिकस्थितिः विषमतां गता अस्ति । किं वयं तं सजीवं ग्रहीतुं शक्नुयाम ?'' इति अपृच्छत् सिद्धसाधकः ।

जयशीलः क्षणकालं विचिन्त्य अवदत् - ''सिद्धसाधक ! भवतः रूपम् आकारः वेषः व्यवहारः इत्यादयः सामान्येभ्यः भिन्नाः सन्ति । अतः भवान् एव तं सजीवं ग्रहीतुं समर्थः । तत् कार्यं भवता एकाकितया साधयितुं शक्येत वा न वा इति अनन्तरं चिन्तयाम । इदानीं भवान् तस्य पुरतः गत्वा कथमपि तस्य खड्गं वशीकर्तुं प्रयासं करोतु । मायासरोवरं प्रति गन्तुं कः मार्गः, कथं च गन्तव्यम् इत्यादिकं तस्य मुखात् ज्ञातव्यम् अस्ति । तदहं करिष्यामि'' इति ।

एतत् अङ्गीकृत्य सिद्धसाधकः सर्पणखेन मेलनाय ततः निर्गतवान् । तस्य निर्गमनस्य अनन्तरं जयशीलः वामनसेनाध्यक्षम् उक्तवान् - ''सेनाध्यक्षवर्य ! विचित्रवेषवतः तस्य शक्तिः का इति वयं सर्वथा न जानीमः । आवश्यकतायां सत्यां भवता सिद्धसाधकस्य साहाय्यं करणीयं भवेत् । अतः भवान् वृक्षाणां मध्ये निलीय तिष्ठन् सर्वं जागरूकतया परिशीलयतु'' इति ।

''यथाज्ञापयति आर्यः । भवतः आज्ञा शिरोधार्या मम'' इति उक्त्वा सः स्वस्य वाहनम् आरुह्य ततः निर्गतवान् ।

सिद्धसाधकः सर्पणखस्य समीपं गत्वा शूलम् उन्नीय - ''मदीयं वृक्षं खड्गप्रहारेण पीडितवान् कः भवान् ? एषः वृक्षः मम आराध्यदेवः इति किं भवान् न जानाति ? किमर्थम् एषः वृक्षः पीडितः भवता ? एतस्य अल्पाम् अपि क्षतिम् अहं सर्वथा न सहे'' इति रोषेण अवदत् ।

एतत् श्रुत्वा सर्पणखः स्वस्य खड्गं सिद्ध-साधकस्य उरः लक्ष्यीकृत्य गृहीत्वा निर्भयतया स्थितवान् ।

एतत् दृष्ट्वा क्रोधमिश्रितस्वरेण अवदत् सिद्धसाधकः - ''अये ! दर्शनात् भासते यत् भवान् मायासरोवरेश्वरस्य सेवकः स्यात् इति । एवं ननु ?'' इति ।

एतत् श्रुत्वा सर्पणखः किञ्चिदिव भीतः । सः चिन्तितवान् यत् एषः कश्चन महामान्त्रिकः स्यात्, यदि एवं न स्यात् तर्हि अयं कथं वा अज्ञास्यत् यत् अहं मायासरोवरेश्वरस्य सेवकः इति ? इति ।

सिद्धसाधकः अवगतवान् यत् मम युक्तिः फलिता इति । अतः मनसि एव गर्वं वहन् सः गम्भीरस्वरेण अवदत् - ''अहो, कियत्

धाष्टर्यं भवतः । सरोवरेश्वरस्य सेवकः सन् अपि भवान् मां दृष्ट्वा अपि इतोऽपि अश्वस्य उपरि एव उपविष्टः अस्ति खलु ? हुम्, अश्वात् अवतरतु रे'' इति ।

सर्पणखः झटिति अश्वात् अवतीर्णः । सिद्धसाधकः तस्य समीपं गत्वा आज्ञापितवान् – ''येन खड्गेन भवता वृक्षस्य क्षतिः कृता सः खड्गः एतस्मिन् एव क्षणे मम पदतले अर्पणीयः भवता'' इति ।

तदा सर्पणखः सन्देहं प्रकटयन् पृष्टवान् – ''मम स्वामिनं भवान् कथं जानाति ? वृक्षस्य पीडा कथं वा ज्ञाता भवता ? प्रत्यक्षदर्शनेन उत मन्त्रशक्त्या ?'' इति ।

एतत् श्रुत्वा सिद्धसाधकः हसन् अवदत् – ''अये ! मम मन्त्रशक्तिः न सामान्या । भवतः मित्रं मकरकेतुः अपि ज्ञायते मया । सः खड्गः यावत् भवत्समीपे स्थास्यति तावत् भवतः अपायः निश्चितः । अतः आदौ तं मम पदतले अर्पयतु । तेन एव भवतः हितं सेत्स्यति'' इति ।

तावता सर्पणखः किमपि स्मृत्वा अवदत् – ''भोः, भवान् कः इति इदानीं स्मृतं मया । नरवानरस्य स्वामी कृपाणजित् भवद्विषयं भवन्मित्रविषयं च माम् उक्तवान् अस्ति । भवतः मूलं ज्ञायते मया । भवान् कापालिकः खलु ?'' इति ।

सिद्धसाधकः शूलेन भूमिं सकृत् प्रताड्य – ''भवान् मां कश्चित् सामान्यं कापालिकं मन्यते इति मन्ये । भोः स्मरतु, अहम् अस्मि सिद्धसाधकः । महासिद्धिं प्राप्तवान् महा-मान्त्रिकः'' इति अवदत् ।

''भवतः कुतन्त्रम् अवगतं मया । आदौ मां खड्गहीनं कृत्वा ततः मां गृहीत्वा क्षुद्रदेवतायै कस्यैचित् अर्पयितुम् इच्छति भवान्'' इति





वदन् सर्पणखः सिद्धसाधकं खड्गेन प्रहर्तुम् आगतः ।

तावता झटिति सेनाध्यक्षः सर्पणखस्य पृष्ठतः आगतवान् । तदीयः मेषः सर्पणखं पृष्ठे बलात् अतुदत् । तस्मात् सर्पणखः अधोमुखतया अपतत् । तदीयः खड्गः हस्तात् च्युतः सन् दूरे अपतत् ।

सिद्धसाधकः तस्य खड्गस्य उपरि स्वपादं स्थापितवान् । तावता जयशीलः अपि तत्र उपस्थितः । अधोमुखतया पतितं सर्पणखम् उत्थाप्य सः अवदत् - ''अये ! सर्पणख ! विलक्षणं नाम भवतः । नामानुगुणं रूपम् अपि विलक्षणम् एव । सर्पः जिह्वावान् भवति इति मया श्रुतम् आसीत्, किन्तु सः नखवान् भवति इति तु न श्रुतम् आसीत् मया अद्यावधि'' इति ।

ततः सः सिद्धसाधकतः खड्गं स्वीकृत्य सर्पणखाय तस्य दानम् अभिनयन् - ''यदि खड्गयुद्धे महती स्पृहा तर्हि एतं स्वीकरोतु तावत्'' इति अवदत् ।

''वीरः अन्यस्य कृपया प्राप्तं खड्गं स्वीकर्तुं न इच्छति । स्वशौर्येण यत् प्राप्तं तदेव भवति तदीयम्'' इति गम्भीरस्वरेण उक्तवान् सर्पणखः ।

ततः सः पादेन भूमिं सकृत् प्रहृत्य सिद्धसाधकम् आक्रान्तुम् उद्युक्तः । किन्तु तावता सिद्धसाधकः तं कटौ गृहीत्वा उपरि क्षिप्तवान् । यावत् सः भूमिसमीपम् आगतः तावता पुनः तस्य कण्ठं पादौ च गृहीत्वा - ''अहो, महाकालाय बलिरूपेण अर्पयितुं योग्यः जनः अद्य मया लब्धः'' इति उक्त्वा सकृत् तं भ्रामयित्वा ततः बलात् भूमौ पातितवान् ।

सर्पणखः इदानीं भयेन कम्पते स्म । अधोमुखतया पतितः सः कष्टेन उत्थाय उपविश्य करौ योजयित्वा दैन्येन - ''महाशयाः, मां मा मारयन्तु कृपया । अहं मम सहोदरश्च मकरकेतुम् अन्विष्यन्तौ अत्र आगतौ । मम भ्रातरं सर्पसखं नरवानरः उन्नीय नीतवान् अस्ति । तं कथमपि अन्विष्य अहं भवतां समीपम् एव प्रत्यागमिष्यामि । कृपया अनुग्रहं कुर्वन्तु'' इति प्रार्थितवान् ।

''गर्वस्य अपगमात् इदानीं भवतः बुद्धिः सम्यक् जाता अस्ति'' इति सर्पणखम् उक्त्वा सिद्धसाधकम् उद्दिश्य - ''सिद्धसाधक ! महाकालाय बलिरूपेण अर्पयितुं नायं समयः । त्वरां मा करोतु'' इति उक्त्वा सर्पणखं पश्यन् सः पुनः अवदत् - ''भवतः सहोदरस्य

अन्वेषणविषये वयम् अपि निश्चयेन साहाय्यं करिष्यामः । ततः पूर्वं भवता वचनं दातव्यं यत् अस्मदादेशः विना विरोधं पालयिष्यते इति । भवान् अस्मान् मायासरोवरं नयेत्'' इति ।

''यस्य सरोवरस्य नाम भवन्तः वदन्तः सन्ति तं यदि अहं दर्शयेयं तर्हि मम शिरः सहस्रधा भग्नं भवेत् । शापः मां ग्रसेत्'' इति भीत्या अवदत् सर्पणखः । तस्य मुखं कान्तिहीनं जातम् आसीत् ।

''एवम् ! शापवशात् यत् भवेत् तद् इदानीम् एव अहं करिष्यामि'' इति वदन् जयशीलः कोषात् खड्गम् आकृष्टवान् । तावता अश्वस्य खुरपुटध्वनिः दुरात् श्रुतः । सर्वे तस्यां दिशि दृष्टिं प्रसारितवन्तः ।

कृपाणजित् जलाश्वम् आरुह्य वेगेन आगच्छन् खड्गम् इतस्ततः चालयन् - ''सः जयशीलः क्व ? तत्सहचारी कापालिकश्च क्व ? तौ अहं मारयिष्यामि ! खण्डशः कर्तयिष्यामि'' इति उच्चैः वदन् वृक्षाणां मध्ये गच्छन् आसीत् ।

तदा सर्पणखः सिद्धसाधकस्य हस्तं गृहीत्वा - ''महाशय ! अलं शूलप्रयोगेण । मम प्रार्थनां शृणोतु तावत् । एतेन दुष्टेन पालितः नरवानरः एव मम अग्रजम् उन्नीय अनयत् । अतः सः नरवानरः कुत्र इति एतस्य मुखात् ज्ञात्वा अहम् एव एतं संहरिष्यामि'' इति अवदत् ।

जयशीलः खड्गं सर्पणखाय यच्छन् - ''सः कृपाणजित् खड्गयुद्धे नितरां निपुणः । अतः जागरूकताश्रयणं वरम्'' इति उक्त्वा सिद्ध-



साधकेन सह वृक्षाणां मध्ये कुत्रापि अदृश्यतां गतः ।

एतावता जलाश्वं चालयन् आगतः कृपाणजित् सर्पणखं दृष्ट्वा तत्समीपम् आगत्य - ''भोः, कः भवान् ? गडेकोण्डस्य वसति-समीपे मत्कण्ठे पाशं क्षिप्तवान् भवान् एव खलु ?'' इति अपृच्छत् ।

''आम् । अहम् एव सः । भवान् यं जलाश्वम् आरूढवान् अस्ति सः जलाश्वः मदग्रजस्य । मम भ्राता कुत्र ? किं तस्य काऽपि हानिः कृता भवता ?'' इति सोद्वेगं पृच्छन् सर्पणखः कृपाणजितः समीपम् आगतवान् ।

कृपाणजित् स्वस्य हस्तौ उन्नीय - ''भोः, तत्रैव तिष्ठतु तावत् । नरवानरः जलाश्वम् आरूढवन्तं भवत्सहोदरम् अकस्मात् उन्नीय कुत्रापि गतवान् । कस्यचित् वृक्षस्य पार्श्वे



इति ।

''भवदुक्तं युक्तम् एव । किन्तु तौ अस्माकं नेत्रपथात् अपगच्छन्तौ स्तः । झटिति इति-कर्तव्यता निर्णेतव्या अस्माभिः'' इति अवदत् सिद्धसाधकः ।

वामनसेनाध्यक्षः दूरे स्थित्वा आश्चर्येण नेत्रे विशालीकृत्य एतत्सर्वं पश्यन् आसीत् । जयशीलः तं स्वसमीपम् आहूय अवदत् - ''सेनाध्यक्षवर्य ! धावन्तौ तौ अस्माभिः ग्रहीतव्यौ स्तः । एतस्मिन् परिसरे भवतः जनाः वसन्ति खलु ? तान् सावधानान् कृत्वा किम् एतौ सजीवं ग्राहयितुं शक्नुयात् भवान् ?'' इति ।

''श्रीमन् ! एतत् तु न कष्टकरं कार्यम् । अहं मम जनान् सावधानान् करिष्यामि इदानीम् एव'' इति उक्त्वा सेनाध्यक्षः स्वस्य वाहनम् आरुह्य ततः निर्गतवान् ।

''सिद्धसाधक ! आवां तस्य लघुपर्वतस्य उपरि स्थित्वा एतेषां हस्तकौशलं प्रत्यक्षं पश्याव तावत्'' इति उक्त्वा समीपस्थं लघु-पर्वतम् आरूढवान् जयशीलः । सिद्ध-साधकः तम् अनुसृतवान् ।

सर्पणखः कृपाणजितम् अनुसरन् आसीत् । तस्य मनसि अभासत यत् वृक्षबहुले एतस्मिन् घने अरण्ये एतस्य ग्रहणं न शक्यम् एव इति । अतः सः उच्चस्वरेण कृपाणजितम् अवदत् - ''भोः कृपाणजित् ! गमनं स्थगयतु तावत् । मम भ्राता जीवति उत न इति मां वदतु । तं जलाश्वं मह्यं प्रत्यर्प्य भवान् इतः कामं निर्गच्छतु नाम'' इति ।

''जलाश्वं प्रतिप्राप्य भवान् मां न मारयेत्

स्थितः एषः जलाश्वः मया प्राप्तः'' इति अवदत् ।

''मया यत् पृष्टं तस्य उत्तरं न एतत् । मम भ्राता कुत्र रे ?'' इति क्रोधेन पृच्छन् सर्पणखः कृपाणजितः समीपं गतवान् ।

एतत् दृष्ट्वा नितरां भीतः कृपाणजित् स्वस्य अश्वं परावर्त्य - ''मम परमशत्रुः अस्ति जयशीलः । तस्य मारणम् एव मम प्रथमं लक्ष्यम् । भवादृशैः सह युद्धेन कालं यापयितुम् अहं न इच्छामि'' इति उक्त्वा स्वस्य अश्वं वेगेन चालितवान् ।

सर्पणखः अपि स्वस्य अश्वं परावृत्य कृपाणजितम् अनुसृतवान् । वृक्षाणां पृष्ठतः स्थित्वा एतत्सर्वं दृष्ट्वा जयशीलः सिद्धसाधकम् अवदत् - ''तत्र धावतोः एकतरः अस्माकं शत्रुः । अपरस्य मैत्री सम्पादिता चेत् मायासारोवरं प्रति गमनाय मार्गः ज्ञायेत''

इत्यत्र कः विश्वासः ? अहं भवता सह युद्धात् बिभेमि इति न । युद्धे कस्य जयः इति भगवान् एव जानाति । जयशीलस्य मारणात् पूर्वम् अहं मरणं स्वागतीकर्तुं न इच्छामि । अतः आदौ जयशीलस्य संहारः करिष्यते । ततः भवन्तं संहरिष्यामि'' इति वदन् अश्वं वेगेन चालयन् कस्याश्चित् नद्याः तीरं प्राप्तवान् सः ।

तम् एव अनुसरन् वेगेन आगतः सर्पणखः अपि तत् नदीतीरं प्राप्तवान् । अनुतटं धावन्तं कृपाणजितम् अनुसृतवान् सः ।

अत्रान्तरे सावधानतासम्पादनाय वादितायाः ढक्कायाः ध्वनिः वनवासिभिः श्रुतः । ते कृपाणजितं सर्पणखं च अनुसरन्तः तौ सजीवं ग्रहीतुं प्रयासं कृतवन्तः । तेषां हस्तेषु शूलानि आसन् । केचन वनवासिनः कृपाणजितः पुरतः शूलधारिणः सन्तः स्थिताः आसन् । अतः कृपाणजित् अग्रे धावितुं न शक्नोति स्म । प्रतिगन्तुम् अपि सः न शक्नोति स्म, यतः सर्पणखः खड्गहस्तः सन् तम् अनुसरति स्म ।

कृपाणजित् अचिन्तयत् यत् इदानीं नद्यां पतनं विना अन्यः मार्गः नास्ति इति । अतः सः प्रवाहस्य दिशि अश्वं प्रेरितवान् । तदा तेन प्रवाहे उभौ मकरौ दृष्टौ !

तौ घोरमकरौ दृष्ट्वा सः स्तब्धः जातः । 'मम पृष्ठतः शत्रुः खड्गहस्तः सन् संहाराय आगच्छन् अस्ति । पुरतः अन्ये शूलहस्ताः सन्तः मम ग्रहणाय उद्युक्ताः दृश्यन्ते । नदीं प्रविश्य पलायनं करोमि इति यावत् अहं चिन्तयामि तावता तत्र घोरमकरयोः उपस्थितिः दृश्यते ! सर्वत्रापि मृत्युलीला ! इदानीं किं करणीयं मया ? कीदृशं मरणम् अङ्गी-करणीयम् ? शत्रूणां हस्तगतः यदि भवेयं तर्हि मरणं निश्चितम् । किन्तु नद्यां न तथा । कथमपि प्राणरक्षणम् अपि सम्भवेत् । अपि



च मया आरूढः अस्ति जलाश्वः । सः जले कथमपि स्वप्राणान् रक्षितुं प्रयासं कुर्यात् । तदा ममापि प्राणरक्षणं भवेत् कदाचित्' इति चिन्तयित्वा सः जलस्य दिशि एव अश्वं प्रेरितवान् ।

कृपाणजितम् अनुसृत्य आगतः सर्पणखः एतत् दृष्ट्वा स्वगतम् अवदत् - ''अहो, महामूर्खः एषः ! मकरौ दृष्ट्वा अपि नदीम् अवतीर्णः अस्ति अयम् । एतं मकरौ खादतां नाम । किन्तु जलाश्वः अक्षतः तिष्ठेत् । यदि मम भ्राता प्राप्येत तर्हि मायासरोवरं प्रतिगमनाय एषः जलाश्वः एव एकमात्राधारः'' इति । अतः सः अपि अश्वसहिततया नदीं प्राविशत् ।

उभौ अपि मकरौ कृपाणजितम् अनुसृतवन्तौ । प्रवाहवेगश्च कृपाणजितम् अधः प्रेषयति स्म । सर्पणखः खड्गहस्तः सन् पृष्ठतः आसीत् । तीरस्थाः वनवासिनः पाषाणक्षेपणेन तस्य पीडनम् आरब्धवन्तः ।

सर्पणखः उच्चस्वरेण तान् अवदत् - ''अहं भवतां मित्रम् अस्मि । तं दुष्टम् अहं सजीवं ग्रहीष्यामि । अतः पाषाणक्षेपणं स्थगयन्तु कृपया'' इति ।

एतावता तेन लक्षितं यत् कश्चन मकरः कृपाणजितः पादं ग्रहीतुम् उद्युक्तः इति । कृपाणजित् खड्गस्य अग्रभागेन तम् अविध्यत् । एतस्मात् सः मकरः व्रणितः सन् जले लुण्ठनम् आरब्धवान् । तावता अपरः मकरः अश्वस्य अपरपार्श्वं गत्वा मुखं व्यादाय कृपाणजितः ग्रहणाय आगतः । एतत् दृष्ट्वा जलाश्वः नितरां भीतः । अतः सः तीरस्य दिशि गन्तुं प्रयासम् अकरोत् । कृपाणजित् खलीनम् आकर्षन् तस्य निग्रहाय प्रयत्नं करोति स्म । तथापि भीतः सः कृपाणजितं तटस्थस्य वृक्षस्य समीपम् अनयत्, यश्च प्राणहारी आसीत् ।

तस्य मृत्युवृक्षस्य समीपे एव स्थिताः वनवासिनः उच्चस्वरेण उक्तवन्तः - ''अये, अश्वं प्रतिनयतु । अन्यथा सः वृक्षः भवन्तं खादिष्यति'' इति ।

अश्वस्य निग्रहणं स्थगनं वा कर्तुं न शक्तं कृपाणजिता । यदा मृत्युवृक्षः आसन्नः तदा काचित् शाखा कृपाणजितं बाहुभ्याम् इव गृहीत्वा उन्नेतुम् उद्युक्ता जाता ।

*- (अनुवर्तते)*



# वेताल-कथा

## उत्तराधिकारी

त्रिविक्रमः स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! भवतः व्रतबुद्धिः असाधारणी इत्यत्र नास्ति सन्देहः । किन्तु मम सन्देहः यत् व्रतबुद्धिमान् भवान् युक्तायुक्तविवेकी अपि स्यात् वा न वा इति । यौवनं, धनसम्पत्तिः, प्रभुत्वम् इत्यादयः विवेकं नाशयन्ति । विवेके भ्रष्टे निर्णयाः असमीचीनाः भवन्ति । एतस्य प्रत्यक्षम् उदाहरणम् अस्ति वज्रनाथः । सः महाधनिकः आसीत् । स्वस्य उत्तराधिकारिणः चयनविषये तेन



प्रमादः कृतः । भवतः मार्गायासस्य परिहारार्थं तस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

वज्रनाथः विक्रमपुरस्य निवासी । सः धनाढ्यः दयालुः चापि । साहाय्यम् इष्ट्वा आगतं यं कमपि निराशं न कृतवान् आसीत् सः ।

महती सम्पत्तिः कीर्तिः च अस्ति चेदपि तदीये जीवने निश्चिन्तता तु न आसीत् । यतः सः निस्सन्तानः आसीत् । 'आवयोः अनन्तरं को वा एतस्याः सम्पत्तेः उत्तराधिकारी स्यात्, को वा आवां सद्गतिं प्रापयेत् ?' इति सः तत्पत्नी च सदा चिन्तयतः स्म ।

तयोः सन्तानराहित्यं बान्धवाः जानन्ति स्म एव । अतः ते तयोः कृत्रिमप्रीतिम् अधिकतया प्रदर्शयन्तः मिथ्याप्रशंसां कुर्वन्ति स्म । तेषाम् एतादृशः व्यवहारः वज्रनाथस्य खेदं दिने दिने वर्धयति स्म ।

कदाचित् नागेन्द्रवर्मा नाम कश्चन बन्धुः वज्रनाथस्य गृहम् आगतवान् । भोजनस्य अनन्तरं सः वज्रनाथम् उक्तवान् - ''मम पुत्रः चन्द्रशेखरः बुद्धिमान् । स्थानीये गुरुकुले यावत् अध्येतुं शक्येत तावत् अधीतं तेन । वाणिज्यशास्त्रे विशेषनैपुण्यं प्राप्तुम् इच्छति सः । तदर्थं मणिद्वीपं प्रति सः प्रेषणीयः इति मम इच्छा । किन्तु एतदर्थं यत् आर्थिकबलम् आवश्यकं तत् मयि नास्ति । यदि भवान् किञ्चित् आर्थिकसाहाय्यं कुर्यात् तर्हि मम पुत्रस्य विद्याभ्यासः विना विघ्नं समाप्तः भवेत्'' इति ।

''सरस्वत्याः कृपां प्राप्तुम् अर्हः अस्ति भवतः पुत्रः इति तु महतः सन्तोषस्य विषयः । तस्य अध्ययनाय यः व्ययः भवेत् तम् अहं निर्वक्ष्यामि । भवान् निश्चिन्तः भवतु । तं मणिद्वीपं प्रति प्रेषणाय व्यवस्थां करोतु'' इति अवदत् वज्रनाथः । ततः सः चन्द्रशेखरस्य विद्याभ्यासाय यावत् धनम् आवश्यकं तावत् नागेन्द्रवर्मणे दत्तवान् ।

बान्धवाः एतां वार्तां ज्ञातवन्तः । ते अचिन्तयन् - 'चन्द्रशेखरस्य बुद्धिमत्तया वज्रनाथः आकृष्टः अस्ति । तम् एव सः स्वस्य उत्तराधिकारिणं कर्तुम् इच्छति । अतः एव तस्य विद्याभ्यासाय तावत् धनसाहाय्यं कृतम्' इति ।

कदाचित् वज्रनाथः पत्न्या सह मन्दिरं गच्छन् आसीत् । मन्दिरसमीपे कश्चन युवकः अयाचत् - ''श्रीमन् ! नितरां बुभुक्षितः

अस्मि । किञ्चित् साहाय्यं करोतु कृपया'' इति । वज्रनाथः तस्मै कानिचन रूप्यकाणि दत्तवान् । एतत् दृष्टवतः तस्य युवकस्य मुखं विकसितं जातम् ।

सप्ताहानन्तरं पुनः वज्रनाथः यदा मन्दिरम् आगतवान् तदा सः एव युवकः तेन दृष्टः । किन्तु सः भिक्षायाचनं कुर्वन् न आसीत्, प्रत्युत मन्दिरस्य पुरतः पुष्पाणि विक्रीणानः आसीत् ।

वज्रनाथं दृष्ट्वा सः करौ योजयित्वा – ''श्रीमन् ! भवादृशैः दातृभिः दत्तैः नाणकैः अहं मम उदरं पूरयन् आसम् । सप्ताहात् पूर्वं भवता अधिकं धनं दत्तम् । तेन अहं पुष्पाणि क्रीत्वा तेषां वाणिज्यम् आरब्धवान् अस्मि । इदानीं मम जीवनं तृप्तिपूर्णम् अस्ति । भवता यत् धनं दत्तं तत् कदाचित् अहं प्रत्यर्पयिष्यामि'' इति अवदत् ।

तं दृष्ट्वा वज्रनाथः नितरां सन्तुष्टः । ततः आरभ्य यदा यदा सः मन्दिरम् आगच्छति स्म तदा सर्वदा तस्मात् एव पुष्पाणि क्रीणाति स्म । एवम् एव दिनानि गतानि ।

कदाचित् मध्यरात्रे वज्रनाथः अकस्मात् जागरणं प्राप्तवान् । तस्य मनः चिन्ताकुलम् आसीत् ।

तस्य पत्नी पत्युः चिन्तायाः कारणं पृच्छन्ती अवदत् – ''भगवता अस्मभ्यं प्रभूता सम्पत्तिः दत्ता अस्ति । किन्तु सन्तानः न दत्तः । अतः अस्माकं बन्धूनां पुत्रः कोऽपि दत्तकरूपेण स्वीकृतः चेत् वरं भवेत् । सः अग्रे अस्माकं वाणिज्ये साहाय्यं कुर्यात् । एवं ननु ?'' इति ।



''आम् । किन्तु दत्तकरूपेण यः स्वीक्रियेत सः बन्धुः एव भवेत् इति न । कश्चित् धर्मबुद्धिः चेतव्यः अस्माभिः । तादृशः एव योग्येन क्रमेण धनस्य उपयोगं कुर्यात् । अतः दैवे भक्तिः, धर्मे रतिः च यस्य विशेषतः अस्ति तादृशः कश्चन युवकः अन्वेष्टव्यः अस्माभिः'' इति ।

''अस्तु । सर्वं कारयिष्यति भगवान् एव । अतः इदानीं निश्चिन्ततया भवान् निद्रां करोतु'' इति उक्तवती पत्नी ।

अनन्तरदिने वज्रनाथः मन्दिरं गतवान् । तत्र कश्चन युवकः तस्य अवधानम् आकर्षत् । सः युवकः मन्दिरस्य कोणे पद्मासने उपविश्य ध्याने निमग्नः आसीत् । अग्रिमेषु पञ्चसु दिनेषु अपि सः युवकः तथैव तत्र उपविष्टः आसीत् ।

षष्ठे दिने यदा युवकः नेत्रे उन्मीलितवान्



तदा वज्रनाथः तं पृष्टवान् - "वत्स ! किं नाम भवतः ? किं क्रियते भवता ? कुत्रत्यः भवान् ?" इति ।

"अहं कश्चन अनाथः अस्मि । सत्यवान् इति मम नाम । सर्वदा भगवतः ध्यानं मम प्रवृत्तिः" इति विनयेन वज्रनाथम् उक्तवान् सः युवकः ।

"भवतः अन्नपानादिव्यवस्था कथं प्रचलति ?" इति कुतूहलेन तं पृष्टवान् वज्रनाथः ।

"तां व्यवस्थां करोति भगवान् एव । यदा अहं ध्याने निमग्नः भवामि तदा बुभुक्षादयः मां न बाधन्ते आधिक्येन । सर्वेषां रक्षणं यः करोति सः एव भगवान् ममापि रक्षणं करोति । अतः अन्नादिविषये अहं कदापि अधिकतया न चिन्तयामि । यदृच्छया यत् प्राप्यते तावता एव तृप्तिः मम" इति अवदत् सत्यवान् ।

एतानि वचनानि श्रुत्वा वज्रनाथः नितरां सन्तुष्टः । 'एतादृशः एव योग्यः तरुणः जनः मया अन्विष्यमाणः आसीत्' इति अचिन्तयत् सः ।

गृहं प्रत्यागतः सः पत्नीं सर्वान् विषयान् उक्तवान् । सा अपि एतत् श्रुत्वा सन्तोषं प्राप्तवती । तौ निर्णीतवन्तौ यत् तस्य युवकस्य व्यवहारस्य परिशीलनार्थं जनाः योजनीयाः इति ।

तस्मात् दिनात् तस्य युवकस्य आहार-व्यवस्था वज्रनाथेन कृता । तदीयाः सेवकाः तस्य युवकस्य सर्वान् अपि व्यवहारान् परिशीलयन्तः आसन् ।

द्वित्राणां दिनानाम् अनन्तरं ते वज्रनाथम् उक्तवन्तः - "महाशय ! तस्य युवकस्य नेत्राभ्याम् अश्रूणि सदा प्रवहन्ति भवन्ति" इति ।

आश्चर्यचकितः वज्रनाथः तस्मिन् एव दिने युवकस्य समीपं गत्वा अवदत् - "किमर्थं सदा अश्रूणि स्रावयति भवान् ? कीदृशं कष्टं बाधते भवन्तम् ? यदि भवान् स्वसमस्यां मां वदेत् तर्हि तस्याः निवारणार्थम् अहम् अपि साहाय्यं कुर्याम्" इति ।

सत्यवान् वज्रनाथस्य पादौ गृहीत्वा अश्रूणि स्रावयन् एव प्रार्थितवान् - "श्रीमन् ! कृपया उदारेण महात्मना भवता पापी अहं क्षन्तव्यः" इति ।

"क्षमायाचनं किमर्थम् ? कः अपराधः कृतः भवता ? किमर्थम् आत्मानं पापिनं कथयति भवान् ? सर्वं विस्तरेण वदतु तावत्"

इति उक्तवान् वज्रनाथः ।

''भवान् यथा चिन्तयति तथा दैवभक्तः न अहम् । अहम् अस्मि कश्चन चोरः । कदाचित् मध्यरात्रे अहं भवतः गृहम् आगतवान् आसं चौर्यार्थम् । तस्मिन् समये भवान् दत्तकस्वीकारविषयं पत्नीं वदन् आसीत् । तदा अहं चिन्तितवान् यत् भवतः सम्पत्तेः उत्तराधिकारितां प्राप्तुम् एषः सुवर्णावसरः इति । अतः अहं तद्दिने विना शब्दं भवतः गृहात् निर्गतः । भवान् तदनन्तरदिने मन्दिरम् आगमिष्यति इति अहं जानामि स्म । अतः अहं भक्तस्य वेषं धृत्वा ध्याने निमग्नः जातः । मया यथा चिन्तितं तथैव प्रवृत्तम् । भवता अहं दृष्टः । किन्तु गच्छता कालेन भगवति भक्तिः मयि उद्बुद्धा । पूर्वं मया कृतानि चौर्याणि, पापानि च माम् अपीडयन् । तस्मात् आत्मनि घृणा उत्पन्ना । अप्रयत्नेन एव नेत्राभ्याम् अश्रुधारा निर्गता'' इति स्वकथाम् उक्तवान् सत्यवान् ।

एतानि वचनानि श्रुत्वा वज्रनाथः आश्चर्येण स्तब्धः जातः ।

तदा सत्यवान् एव पुनः अवदत् - ''भवान् धर्मात्मा अस्ति । अहं च पापी । भवन्तं वञ्चयितुं मया प्रयासः कृतः । अतः भवान् यं दण्डं विधत्ते तम् अहं सन्तोषेण स्वीकरोमि । दण्डम् अनुभूय एतत् नगरं त्यक्त्वा अन्यत्र गमिष्यामि'' इति ।

वज्रनाथः क्षणकालं विचिन्त्य - ''वत्स ! भवता एतत् नगरं त्यक्तव्यं नास्ति । भवान् एव मम सम्पत्तेः उत्तराधिकारी'' इति उक्त्वा तेन सह स्वगृहं गतवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! वज्रनाथः चोरं पापिनं च तं सत्यवन्तं किमर्थम् उत्तराधिकारिणं कृतवान् ? किं तस्य उचितानुचितनिर्णयसामर्थ्यम् अपगतम् ? चन्द्रशेखरः बुद्धिमान् । वाणिज्यशास्त्रम् एव



पठितुम् उद्युक्तः सः । तादृशः दक्षः एव उत्तराधिकारित्वेन नियोक्तव्यः आसीत् खलु वज्रनाथेन ? अथवा सः पुष्पविक्रेता तरुणः वा उत्तराधिकारी करणीयः आसीत् । सः अल्पेन एव धनेन पुष्पविक्रयणम् आरब्धवान्, स्वस्य स्वावलम्बिताप्रवृत्तिं निरूपितवान् च । अतः तस्य वाणिज्यनैपुण्यं स्पष्टम् । एतौ उभौ अपि परित्यज्य तेन चोरः किमर्थम् उत्तराधिकारी कृतः ? किम् एतत् उचितम् ? किम् एतत् तस्य मूर्खतां न द्योतयति ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''उत्तराधिकारिणः चयने वज्रनाथेन दोषः न कृतः । तस्य निर्णयः उचितः एव । सः दानशीलः । अतः सः चन्द्रशेखरस्य अध्ययनाय धनं दत्तवान् । चन्द्रशेखरः उत्तराधिकारित्वेन स्वीकरणीयः इति विचारः तस्मिन् न आसीत् । सः भिक्षुकः युवकः धनस्य मूल्यं जानाति स्म, योग्येन क्रमेण उपयोगम् अपि जानाति स्म । वज्रनाथः बुद्धिमन्तं, वाणिज्यदक्षं वा स्वस्य उत्तराधिकारिणं कर्तुं न इच्छति स्म । सः इच्छति स्म धर्ममार्गानुयायिनम् । सत्यवान् चोरः आसीत्, सः वज्रनाथं वञ्चयितुम् उद्युक्तः आसीत्, सः कपटवेषधारी आसीत् इत्यादिकं सत्यम् एव । किन्तु भगवतः ध्यानेन तस्मिन् महत् परिवर्तनं जातम् । सः भगवद्भक्तः अपि जातः । पश्चात्तापाग्निः तस्य सर्वाणि पापानि अदहत् । सः अर्थतः अपि सत्यवान् जातः । अतः एव सः वज्रनाथं क्षमां प्रार्थित-वान्, प्रवृत्तं सर्वम् उक्तवान् च । 'यस्य धर्मे रक्तिः दैवे भक्तिः च भवति सः एव धर्ममार्गेण मम सम्पत्तिं विनियोक्तुम् अर्हति' इति वज्रनाथः जानाति स्म । सम्पत्तिवर्धनं तस्य लक्ष्यं न आसीत् । योग्येन क्रमेण सम्पत्तेः विनियोगः तस्य उद्देशः आसीत् । अतः एव सः सत्यवन्तम् उत्तराधिकारिणं कृतवान् । तस्य निर्णयः निश्चयेन अस्ति औचित्यपूर्णः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






# कौमुद्यां भवतु स्पर्शक्रीडा



कौमुदीमयी रात्रिः । श्रान्तिकारणतः नीरसता । किं करणीयम् इति चिन्ता । एवं ननु ? अत्रास्ति मनोविनोदार्थं मार्गः । समानमनस्कान् कांश्चन मेलयन्तु । 'छाया-कान्ति'क्रीडा प्रचलतु । एषा आधिक्येन क्रीड्यते तमिळुनाडुराज्ये । धावन-ग्रहणक्रीडायाः सामान्यं रूपम् एव छायाकान्तिक्रीडा नाम । क्रीडकाः द्विधा विभक्ताः भवन्ति तत्र । एकः
पक्षः छायायाम्, अपरः कान्तिमये प्रदेशे च तिष्ठति । स्वप्रदेशात् बहिः स्थिताः स्पर्शनेन
बाह्यान् कर्तुं शक्याः । एकैकोऽपि पक्षः पर्यायक्रमेण कश्चित् प्रेषयति विपक्षीयान् क्षेत्रात्
बहिः आनयनाय अभिप्रेरयितुम् । यदि विपक्षीयैः कश्चित् स्पृश्यते तर्हि स्पर्शं प्राप्तवतः
पक्षस्य एकः अङ्कः हीयते । अग्रिमे पूर्णिमादिने भवताम् अपि भवतु एषा क्रीडा ।



# वातामानि न भक्षणाय !

नाणकानि रूप्यकाणि च सस्यम् इव वर्धयितुं शक्यानि इत्यत्र किं विश्वासः भवेत् भवताम् ? पूर्वं १७ शतके गुजरातराज्ये तिक्तवातामफलं धनरूपेण उपयुज्यते स्म । षष्टिः वातामफलानि पैसामूल्यम् अर्हन्ति स्म ।

पुराणकथावली - ८

# मेघानां प्रीतिपात्रीभूतः संन्यासी



ऋष्यशृङ्गः कश्चन तरुणः । अरण्ये एव तस्य वासः । अरण्ये सदा सञ्चरन् सः बहून् आध्यात्मिकविषयान् अधीतवान् । किन्तु प्रापञ्चिकविषयाणां सर्वथा अनभिज्ञः सः । ऋष्यः नाम मृगविशेषः । तस्य शृङ्गम् इव शृङ्गम् एतस्य आसीत् ललाटे । अतः एतस्य नाम ऋष्यशृङ्गः इति जातम् । एतस्य माता अप्सराः । सा शापकारणतः मृगजन्म प्राप्य एतं प्रसूतवती आसीत् ।

ऋष्यशृङ्गः निसर्गप्रियः । निसर्गः अपि तस्मिन् प्रीतिमान् आसीत् । यदा सः अरण्ये गच्छति तदा पुष्पाणि वर्णातिशयेन शोभन्ते स्म । इन्द्रधनुः वर्णमयं सत् विराजते स्म । यदा सः आकाशं पश्यति तदा मेघाः वर्षन्ति स्म ।

अङ्गदेशस्य राजा लोमपादः । कदाचित् अङ्गदेशे महान् क्षामः आपतितः । एतस्य निवारणाय किं करणीयम् इति लोमपादेन न ज्ञातम् । अरण्यवासिनः ऋषयः जानन्ति स्म यत् ऋष्यशृङ्गः आकाशं पश्यति चेत् वृष्टिः भविष्यति इति । ते सम्भूय समालोच्य राजानं सूचितवन्तः यत् ऋष्यशृङ्गः कथमपि राजधानीं प्रति आनीतः चेत् राज्ये वृष्टिः भवितुम् अर्हति इति ।

एतदनुसारेण केचन मन्त्रिणः, आस्थान-विद्वांसः, पुरप्रमुखाः च अरण्यं गतवन्तः ।

ते ऋष्यशृङ्गं दृष्ट्वा राज्ञः निमन्त्रणं श्रावितवन्तः । किन्तु ऋष्यशृङ्गः एतत् निमन्त्रणं तिरस्कृतवान् । रमणीयस्य अरण्यस्य, वन्यानां पशुपक्षिणां च वियोग दिनमात्रम् अपि सोढुं न इच्छति स्म सः । बहुधा निवेदनं कृत्वापि किमपि प्रयोजनम् अप्राप्य राज्ञः प्रतिनिधयः निराशाः सन्तः राजधानीं प्रतिगतवन्तः ।

तरुणः मुनिः ऋष्यशृङ्गः कदापि अरण्यात् बहिः न गतवान् आसीत् । अतः बाह्यप्रपञ्चः कथं भवति इत्येव सः न जानाति स्म । नूतनविषयाणां ज्ञाने तस्य महत् कौतूहलम् आसीत् ।

कदाचित् अश्रुतपूर्वं पक्षिध्वनिं मयूरकेकां वा श्रुत्वा सः तस्य अभ्यासाय तं पक्षिणं मयूरं वा सुदूरम् अनुसृत्य गच्छति स्म । पुनः पुनः तं ध्वनिं श्रुत्वा तस्य अभ्यासं कृत्वा एव प्रत्यागच्छति स्म ।

तस्य एतां प्रवृत्तिं जानन्तः लोमपादस्य आस्थानिकाः अवदन् - ''तेन यत् न दृष्टं तत् प्रदर्श्य तस्मिन् महत् कुतूहलम् उत्पाद्य सः अत्र आनेतव्यः । तस्य आनयनाय एषः एकः एव मार्गः'' इति ।

एतत् श्रुत्वा राजा सुन्दरतरुणीनां नर्तकानां गायकानां च एकं गणं रचितवान् । ततः सः तं गणम् आज्ञापितवान् यत् सः मुनिः कथमपि राजधानीं प्रति आनेतव्यः इति ।

तद्गणीयाः एतत् अङ्गीकृत्य अरण्यं गत्वा ऋष्यशृङ्गस्य पुरतः गानं नृत्यं च आरब्धवन्तः । नृत्यं दृष्ट्वा गानं च श्रुत्वा ऋष्यशृङ्गः नितराम् आश्चर्यचकितः ।

वस्तुतः सः अद्यावधि एतादृशीः तरुणीः





*पूर्णज्ञानस्य उत्सः अस्ति अस्मासु सर्वेषु अपि ।*

*अनेकतायाम् एकता, एकतायाम् अनेकता इत्येषा एव समग्रस्य जगतः वैशिष्ट्यम् अस्ति ।*

**- स्वामी विवेकानन्दः**

न दृष्टवान् आसीत् । सः तेषां गानम् अनुकुर्वन् तं गणम् अनुसृतवान् । एवं गच्छता तेन राजधानी प्राप्ता । प्रासादं दृष्ट्वा सः आश्चर्यम् अनुभवन् समयं च ज्ञातुम् इच्छन् आकाशं दृष्टवान् । तदा आकाशे मेघाः समागताः, धाराकारेण महती वृष्टिः आरब्धा च ।

राजा राज्ञी च अग्रे आगत्य तं तरुण-संन्यासिनं महता आदरेण स्वागतीकृतवन्तौ । अर्घ्यपाद्यादिभिः तं सत्कृत्य 'प्रासादस्य अन्तः आगच्छतु कृपया' इति प्रार्थितवन्तौ ।

मृदुहृदयः मुनिः तयोः प्रार्थनां तिरस्कर्तुम् अशक्नुवन् प्रासादं प्रविष्टवान् । तेन तत्र कानिचन दिनानि उषितम् । राजा राज्ञी च निश्चितवन्तौ यत् राजकुमारी शान्ता तस्मै दातव्या इति ।

वस्तुतः शान्ता अयोध्याधिपतेः दशरथस्य पुत्री । दशरथस्य लोमपादस्य च सुदृढा मैत्री । अतः शान्तां दत्तकरूपेण स्वीकृतवान् आसीत् लोमपादः ।

ऋष्यशृङ्गस्य पुरतः यदा विवाहप्रस्तावः उपस्थापितः तदा सः तं प्रस्तावं सहर्षम् अङ्गीकृतवान् । ततः योग्ये मुहूर्ते ऋष्यशृङ्ग-शान्तयोः विवाहः यथाविधि सम्पन्नः । लोमपादः ऋष्यशृङ्गम् अयोध्यां नीतवान् । तत्र ऋष्यशृङ्गस्य आध्वर्यवे दशरथः पुत्रकामेष्टियागं कृतवान् । ततः दशरथेन रामलक्ष्मणशत्रुघ्नभरताः पुत्रत्वेन प्राप्ताः ।





# विलुप्ता प्रशंसाप्रियता

विशालसेनः विदेहदेशस्य राजा । सः प्रशंसाप्रियः । यः प्रशंसां करोति तस्मै सः अमूल्यानि उपायनानि ददाति स्म । अतः बहवः तस्य प्रशंसां कुर्वन्ति स्म सदापि ।

विशालसेनस्य मन्त्री मुक्तानन्दः । सः अनुभवी । तस्मै राज्ञः एषा प्रशंसाप्रियता न रोचते स्म । कदाचित् सः राजानम् अवदत् - ''प्रभो, राज्ञः प्रशंसाकर्तारः बहवः भवन्ति लोके । तेषु बहवः मिथ्याप्रशंसाकर्तारः स्वार्थसाधकाः । किन्तु तस्य श्रवणात् राज्ञि अहङ्कारः वर्धते । अहङ्कारात् विवेकनाशः । तस्मात् शासनव्यवहारे लोपाः जायन्ते । ततः जनाः कष्टम् अनुभविष्यन्ति । प्रजाहित-चिन्तकः राजा प्रशंसाप्रियः न भवेत् । यः भवतः दोषं वदति तस्मै पुरस्कारं ददातु'' इति ।

मन्त्रिणि विशेषादरः आसीत् राज्ञः । अतः सः प्रशंसकेभ्यः पारितोषिकदानं स्थगितवान् । दोषप्रदर्शकाय पारितोषिकदानम् आरब्धवान् सः । तथापि प्रशंसकाः स्वप्रवृत्तिं न परित्यक्त-वन्तः । कोऽपि तस्य दोषं न प्रदर्शितवान् ।

कदाचित् राजा मन्त्रिणम् एतम् अंशम् उक्तवान् । तदा मन्त्री - ''प्रशंसकानां प्रशंसायाः निवारणाय भवता एव कोऽपि उपायः अन्वेष्टव्यः'' इति अवदत् ।

''उपायः कोऽपि न स्फुरति इत्यतः खलु भवतः साहाय्यम् अहम् इष्टवान्'' इति अवदत् राजा ।

''विना कारणं कोऽपि न प्रशंसति । अतः प्रशंसकः केन उद्देशेन प्रशंसति इति आदौ ज्ञातव्यम्'' इति सूचितवान् मन्त्री ।

अनन्तरदिने एव राजा कञ्चित् अनुचरम्



यत् अस्ति तत् उच्यते । एषा प्रशंसा भवितुं न अर्हति'' इति ।

एतत् श्रुतवतः विशालसेनस्य महान् सन्तोषः जातः । ''भवतः कथनात् अहं सन्तुष्टः अस्मि । प्रशंसकाय पारितोषिकं न दातव्यम् इति नियमः यदि न स्यात् तर्हि अहं भवते उत्तमं पुरस्कारम् अदास्यम् । भवतः इच्छा काऽपि अस्ति चेत् वदतु । ताम् अहं पूरयिष्यामि । भवतः इच्छायाः पूरणं नियमविरुद्धं न भवति'' इति अवदत् राजा ।

तदा सः अनुचरः अवदत् - ''भवतः आस्थाने तिष्ठतः मम का वा इच्छा अपूरिता स्यात् ? अहं मम परिवारजनाः च सन्तुष्टाः स्मः भवतः अनुग्रहेण । मम कश्चन अनुजः अस्ति । विवाहितः सः । उभौ पुत्रौ अपि स्तः तस्य । तस्य कुटुम्बस्य पोषणं मया एव क्रियमाणम् अस्ति । यदि तस्मै आस्थाने कोऽपि उद्योगः भवता दीयेत तर्हि मम भारः अपगतः भवेत्, अहं च आजीवनं कृतज्ञः भवेयम्'' इति ।

विशालसेनः अनुचरस्य अनुजाय उद्योगं दत्तवान् । एवम् एव बहवः राज्ञः प्रशंसां कृत्वा स्वस्य इष्टं साधितवन्तः । एतत् ज्ञात्वा मन्त्री यदा नियमं स्मारितवान् तदा राजा अवदत् - ''ते मम प्रशंसां न कुर्वन्ति, वास्तविकान् अंशान् एव यथास्थितं वदन्ति । एवं कुर्वन्तः ते मत्तः कमपि लाभं प्राप्तुम् उद्युक्ताः अपि न दृश्यन्ते'' इति ।

''प्रभो, को वा प्रशंसकः प्रशंसायाः वास्तविकं कारणं वदेत् ? तत् ज्ञातव्यं चेत् अन्ये प्रष्टव्याः । तदा प्रशंसकस्य अन्तरङ्गं

आहूतवान्, यश्च सदा राजानं स्तौति स्म । तम् अपृच्छत् राजा - ''दोषप्रदर्शकाय मया पुरस्कारः दीयते । तथापि भवता मम कोऽपि दोषः न प्रदर्शितः । प्रशंसकाय पुरस्कारः न दीयते । तथापि प्रशंसा भवता न परित्यक्ता । एतस्य किं कारणम् ?'' इति ।

तदा सः अनुचरः विनयेन करौ योजयित्वा अवदत् - ''प्रभो ! समस्तरीयाणां दोषाः दृश्यन्ते । तान् अहं सम्बद्धान् वदामि एव । भवान् तु महापुरुषः । सामान्यः अहं भवति कथं वा दोषं द्रष्टुं शक्नुयाम् ? महान्तः स्वस्य दोषं स्वयं जानन्ति, आत्मनः परिष्कारं कुर्वन्ति च । अतः तेषु दोषाः न भवन्ति अपि । अतः दोषकथनम् अशक्यम् । मया प्रशंसा क्रियते इति भवता उक्तम् । वस्तुतः दृष्टाः गुणाः मया उक्ताः । गुणकीर्तनं न दोषाय खलु ?

ज्ञायते'' इति अवदत् मन्त्री ।

'एषः मन्त्री कदापि मम सन्तोषं न सहते' इति मनसि एव चिन्तयन् अपि राजा मन्त्रिणः कथनस्य पालने मतिं कृतवान् । सः सोम-नामकम् अनुचरम् आहूय पृष्टवान् - ''रामः यावत् मां प्रशंसति तावत् न प्रशंसति भवान् । एतस्य किं कारणम् ?'' इति ।

तदा सोमः निस्सङ्कोचम् उक्तवान् - ''अहं निस्स्वार्थतया भवद्विषये किमपि वक्तुं यदा उद्युक्तः भवामि तदा रामः मां निरुणद्धि । स्वार्थप्रेरितः सन् सः भवत्सकाशात् किमपि प्राप्तुम् इच्छन् भवतः प्रशंसां करोति आधिक्येन । वास्तविकम् अंशम् अपि सः उत्प्रेक्ष्य वदति'' इति । एतावत् उक्त्वा सः राज्ञः पुरतः स्वस्य काञ्चित् अपेक्षाम् उप-स्थापितवान् । 'एतस्य कथने यद्यपि सत्यम् अस्ति तथापि एषः अपि मत्तः किमपि अपेक्षते एव । अतः एतस्य रामस्य च न कोऽपि भेदः' इति अचिन्तयत् राजा ।

एतदनन्तरं सः मन्त्रिणम् उक्तवान् - ''प्रशंसा मयि सन्तोषं जनयति । अतः प्रशंसा-श्रवणं मम प्रवृत्तिः जाता । निस्स्वार्थभावनया प्रशंसकः किं कोऽपि न लभ्येत ?'' इति ।

तदा मन्त्री स्वग्रामस्य जयशर्माणं स्मृत-वान् । जयशर्मा पण्डितः । अन्येषां प्रशंसा एव तस्य प्रवृत्तिः । किन्तु प्रतिफलं किमपि न इच्छति स्म सः । ग्रामस्य कोऽपि जनः तस्य प्रशंसायाः श्रवणे आसक्तः न आसीत् । 'मम प्रशंसायाः श्रोता कोऽपि नास्ति' इति महान्तं खेदम् अनुभवति स्म जयशर्मा ।

मुक्तानन्दः राजानम् अवदत् - ''प्रभो ! मम ग्रामे जयशर्मा नाम कश्चित् अस्ति । तं कञ्चित् कालम् अनुचरं करोतु । अधिककालं तेनैव सह यापयतु । सः प्रतिफलापेक्षां विना प्रशंसति । तस्मात् भवतः इच्छा पूर्णा स्यात्, देशस्य चापि हितं सिद्धं भवेत्'' इति ।



विशालशर्मा एतत् श्रुत्वा नितरां सन्तुष्टः । सः जयशर्माणम् आनायितवान् । आगमन-समनन्तरम् एव जयशर्मा राज्ञः आकारस्य प्रशंसाम् अकरोत् । राज्ञः नाम्नः अपि प्रशंसा तेन कृता । ततः तस्य वेषभूषणादीनां प्रशंसा कृता । इच्छानिच्छाप्रवृत्तीनां प्रशंसा कृता । आचार-व्यवहारयोः प्रशंसा कृता ।

एतानि वचनानि श्रुत्वा राजा सन्तुष्टः । 'अहो, मयि एतावन्तः विशेषाः सन्ति !' इति चिन्तयन् सः प्रफुल्लितः जातः ।

एवमेव दिनानि गतानि । जयशर्मा

प्रतिक्षणम् अपि राज्ञः प्रशंसां करोति स्म । राजा क्षवं करोति चेत् तस्यापि प्रशंसा ! राजा कासं कृतवान् चेदपि तस्य प्रशंसा । सः कासः कीदृशं शुभं सङ्केतयति इति कथनम् । हिक्काजृम्भणादीनाम् अपि प्रशंसाम् अकरोत् जयशर्मा ।

एकदा राजा कोपं प्राप्य जयशर्माणं भृशम् अनिन्दत् । तदा अपि जयशर्मा राज्ञा प्रयुक्तानां शब्दानां प्रशंसाम् अकरोत् । एतत् दृष्ट्वा राजा आश्चर्येण पृष्टवान् - ''कियत्पर्यन्तं भवान् माम् एवं प्रशंसति ?'' इति ।

''प्रभो ! भवान् सर्वशास्त्रपारङ्गतः, सकलकलाकोविदः च । आकाशे प्रकाशमानः सूर्यः कदाचित् कान्तिहीनः भवेत् । किन्तु तत् कदा सम्भवेत् इति सामान्यैः न ज्ञायते । भवान् अपि सूर्यतुल्यः । प्रशंसा प्रायः तदा समाप्येत यदा च भवान् कान्तिहीनः भवेत् । किन्तु अहं जानामि यत् सूर्यस्य भवतः च कान्तिहीनता असम्भवा इति'' अवदत् जयशर्मा ।

एवम् एव मासः अतीतः । ततः कदाचित् राजा मन्त्रिणम् अवदत् - ''न जाने, एषु दिनेषु प्रशंसाश्रवणे मम अनासक्तिः किमर्थं जायमाना अस्ति इति । भवान् जयशर्माणं ग्रामं प्रति प्रेषयतु । 'गच्छतु' इति तं वक्तुं न शक्नोमि अहम्'' इति ।

एतत् श्रुत्वा मुक्तानन्दः हसन् उक्तवान् - ''प्रभो, अति सर्वत्र वर्जयेत् इति वचनं भवता श्रुतम् एव । निरन्तरं प्रशंसा श्रुता इत्यतः प्रशंसाश्रवणे अद्य भवतः अनासक्तिः उत्पन्ना । जयशर्मा तु अल्पस्यापि निमित्तं बहु प्रशंसति । तेन कृतां प्रशंसां श्रुत्वा मम ग्रामस्य सर्वे जनाः नीरसतां प्राप्तवन्तः सन्ति । अतः ते प्रशंसातः विमुखाः जाताः । अतः अद्य मम ग्रामः प्रगतिपथे अस्ति । यः प्रशंसातः दूरे तिष्ठति तस्यैव प्रगतिः भवति । भवान् अद्य प्रशंसातः जुगुप्सितः अस्ति । एतत् देशस्य उन्नत्यै भवेत्'' इति ।

एतस्मात् राज्ञा विवेकः प्राप्तः । ये प्रशंसायाः इच्छुकाः तेषां समीपं जयशर्माणं प्रेषयति स्म राजा । अल्पे एव काले ते प्रशंसातः विमुखाः भवन्ति स्म । एवं विदेहराज्ये प्रशंसाप्रियाणां सङ्ख्या न्यूना जाता । तस्मात् देशस्य प्रगतिः अपि वेगेन जाता ।



# वार्ताविशेषः

## जनगणनाविवरणसङ्ग्रहः अन्तरिक्षे

गते अक्टोबर्मासे नवमतः षोडशदिनाङ्कपर्यन्तं जनगणना प्रवृत्ता रशियादेशे । जनगणनावसरे प्रतिगृहं गत्वा सर्वेषाम् अपि विवरणं सङ्ग्रहणीयं खलु भवति ? तदनुसारेण तत्रत्याः गणनाकर्तारः प्रतिगृहं गत्वा विवरणं सङ्गृहीतवन्तः । एकोऽपि परित्यक्तः यथा न स्यात् तथा जनगणनाविवरणं सङ्गृहीतं तैः । तदवसरे उभौ आस्ताम् अन्ताराष्ट्रियान्तरिक्षस्थानके । तयोः नाम वलेरिया कोर्सियोनः, सेर्गय थ्रेक्षेवः चेति । तयोः विवरणसङ्ग्रहाय जनगणनाविभागीयाः उभौ प्रेषितवन्तः अन्तरिक्षं प्रति एव । एवं गतौ तौ तत्रत्ययोः विवरणं हस्ताक्षरं च प्राप्य प्रत्यागतौ ।



## अतिवेगयुक्तं भारतीयं रैल्यानम् !

गोवामुम्बयीरैल्यानम् इदानीम् प्रस्थानस्थलात् निर्गत्य प्राप्तिस्थलं प्राप्नोति अष्टघण्टाभ्यन्तरे । इतःपरं तदेव सार्धचतुर्घण्टाभ्यन्तरे तत् दूरं क्रमिष्यति, यदा च द्वादशवर्षेभ्यः पूर्वम् आरब्धा कोङ्कणमार्गनिर्माणयोजना समाप्तिम् एष्यति । तदा यानं प्रतिघण्टं १५० कि.मी.वेगेन प्रयाणं करिष्यति । भारतीयेषु रैलयानेषु तदा 'अतिवेगगामि' इति ख्यातिः भविष्यति तस्य । इदानीं देहली-भोपालयोः मध्ये सञ्चरत् राजधानी-एक्स्प्रेस्यानं शताब्दी-एक्स्प्रेस्यानं च प्रतिघण्टं १२० कि.मी.वेगेन गच्छती अतिवेग-गामिख्यातिमती स्तः ।





# गुप्तदानम्

कोटरपुरे कलाधरः नाम महाधनिकः वसति स्म । सः कोट्यधिपतिः । सर्वसमस्याभिः विनिर्मुक्तः सः पारिवारिकसुखसम्पन्नः आसीत् । यत्र धनं प्रभूततया भवति तत्र सज्जनता न भवति इति लोके श्रूयते । किन्तु कलाधरः एतस्य अपवादः । सः विशालमनस्कः उदारः च । कस्यापि कष्टं तेन ज्ञातं चेत् सः स्वयं सहायहस्तं प्रसारयति स्म ।

रामः तस्य विश्वासपात्रसेवकः । यदि कस्यापि साहाय्यं करणीयं तर्हि कलाधरः रामद्वारा साहाय्यं प्रापयति स्म । बहूनां परिवाराणां कष्टानि तेन निवारितानि । किन्तु ते जनाः न जानन्ति स्म यत् एषः कष्टनिवारयिता कः इति । रामः अपि स्वस्य स्वामिनः नाम्नः गोपने सहकरोति स्म ।

कलाधरस्य श्यालः भूषणः । सः अपि दानं करोति स्म । यत् दत्तं तस्य प्रशंसां कुर्युः जनाः इति सः अपेक्षते स्म । प्रशंसाप्राप्तये विविधान् उपायान् आश्रयति स्म अपि सः । अतः अल्पस्यापि धनस्य दानं सः दशपञ्चदशजनानां पुरतः एव करोति स्म सर्वदा अपि । कदाचित् आत्मना अकृतम् अपि दानं 'मया कृतम्' इति वदन् प्रशंसां प्राप्तुं प्रयतते स्म सः ।

कलाधरस्य व्यवहारः भूषणाय सर्वथा न रोचते स्म । सः कदाचित् कलाधरम् अवदत् – ''भवान् एतावतः धनराशेः दानं करोति । तथापि दातुः भवतः नाम कोऽपि न जानाति । नामगोपनस्य का वा आवश्यकता ? भवता अनुचितं कार्यं तु न क्रियते खलु ? भवान् यादृशम् उत्तमं कार्यं करोति तादृशं तु अङ्गुलिगणनीयाः एव कर्तुम् अर्हन्ति । एवं स्थिते अपि का एषा लज्जा भवतः ? किमर्थं

स्वस्य नाम्नः गोपनार्थं प्रयासः क्रियते ?'' इति ।

तदा कलाधरः मन्दहासं प्रकटयन् अवदत् - ''व्यक्तदानतः प्रशंसा प्राप्यते आधिक्येन । ततः अहङ्कारः वर्धिष्यते । दातुः अहङ्कारः न भूषणम् । सः मां यथा न बाधेत तथा अहं जागरूकतां वहामि सदापि । मह्यं तु एतत् गुप्तदानम् एव रोचते । स्वतृप्त्यै अहम् एतत् करोमि'' इति ।

''अहं गुप्तदानं करोमि इति गर्वः भवतः । भवतः गर्वस्य भङ्गं कर्तुम् अर्हति प्रायः अस्मद्ग्रामीणः रोदनशीलः दामोदरः एव'' इति अवदत् भूषणः ।



''सः कः दामोदरो नाम ?'' इति कुतूहलेन पृष्टवान् कलाधरः ।

''सः कश्चन वृद्धः । सदा तस्य मुखे म्लानता विराजते । जगतः सर्वाणि कष्टानि मम उपरि एव पतितानि इति भावयति सः । भवान् कनकाभिषेकं कुर्यात् चेदपि तस्य मुखे हासः न विलसेत् प्रायः । कनकाभिषेककर्तुः प्रशंसाम् अपि न कुर्यात् सः । भवान् विलक्षणः दाता । स तु विलक्षणः याचकः'' इति अवदत् भूषणः ।

भूषणस्य वचनं श्रुत्वा अपि कलाधरः किमपि न उक्तवान् । सः तस्मिन् एव दिने रामं प्रेषितवान् 'दामोदरस्य विषये सर्वं विवरणं सङ्गृह्य आगच्छतु' इति आदिश्य ।

रामः तस्मिन् एव दिने सायं प्रत्यागत्य दामोदरस्य विषये समग्रं विवरणं श्रावितवान् ।

दामोदरः वृद्धः । वार्धके पत्नी मृता । चत्वारः पुत्राः तस्य । चतुर्णाम् अपि आयः उत्तमः अस्ति । ते गृहस्य पृष्ठतः गोष्ठस्य पार्श्वे जीर्णकुटीरे दामोदरस्य वासव्यवस्थां कल्पितवन्तः सन्ति । सर्वेषां भोजनस्य अनन्तरं यत् अवशिष्यते तत् आनीय काचित् स्नुषा दामोदरस्य पुरतः स्थालिकायां स्थापयति । दामोदरः तत् न खादति । गोभ्यः ददाति सः तत् । अन्यैः यत् धनं दीयते ततः भोजनालये यत्किञ्चित् खादति स्म ।

दामोदरस्य विषयं समग्रं श्रुत्वा कलाधरः रामाय किञ्चित् धनं दत्त्वा अग्रे किं करणीयम् इति सूचितवान् ।

रामः दामोदरस्य गृहं गतवान् । तत्समये चत्वारः पुत्राः अपि गृहे आसन् । रामः तान् उक्तवान् - ''मम पिता पूर्वं नद्यां तरन् कदाचित् प्रवाहेण नीतः । तदा भवतां पिता तस्य रक्षणं कृतवान् आसीत् । मम पिता स्वस्य मरणसमये

माम् एतत्सर्वम् उक्त्वा आदिष्टवान् अस्ति यत् प्राणरक्षकाय प्रतिमासं कृतज्ञतासूचकं धनराशिं दातुं व्यवस्था करणीया इति । यावत् सः जीविष्यति तावत् एषा व्यवस्था अनुवर्तनीया इति मम पिता आज्ञापितवान् अस्ति । मया पित्रे वचनं दत्तं यत् भवतः अपेक्षा पूरयिष्यते इति । अतः इतः परम् अहं प्रतिमासम् आगत्य भवतां पित्रे दामोदरवर्याय धनं दास्यामि'' इति ।

एतत् श्रुतवतां दामोदरस्य पुत्राणां महान् सन्तोषः जातः । ते दामोदरं कुटीरात् गृहस्य अन्तः आनीय तस्य शयनाय प्रकोष्ठं मञ्चं च परिकल्प्य – ''तात ! इतः परं भवतः वासः अत्रैव । वयं सर्वे भवतः सेवां करिष्यामः । स्नुषाः पौत्राः चापि भवतः सेवां श्रद्धया करिष्यन्ति । कापि चिन्ता करणीया नास्ति भवता'' इति अवदन् ।

किमेतत् प्रवर्तते इति दामोदरेण न अवगतम् । मम कष्टम् अद्य दूरं गतम् इति सः अचिन्तयत् । बहूनां वर्षाणाम् अनन्तरं तस्य मुखे मन्दहासः उद्भूतः । रामः एतत्सर्वं दृष्ट्वा आगत्य कलाधरं निवेदितवान् ।

तत्समये भूषणः तत्रैव आसीत् । कलाधरः तम् अवदत् – ''पश्यतु, मया दामोदरस्य मुखे अपि आनन्दरेखा आनीता'' इति ।

तदा भूषणः अपृच्छत् – ''दामोदरः यावत् जीवति तावत् किम् एतत् भवतः प्रातिमासिकं दानम् अनुवर्तिष्यते ?'' इति ।

तदा कलाधरः मन्दहासं प्रकटयन् अवदत् – ''भूषण ! जलाशये जलं किमर्थं सङ्गृह्यते ? जलस्य संरक्षणाय । जलं च किमर्थम् ? पानकृष्याद्युपयोगाय । मम पूर्वजैः धनं सम्पाद्य रक्षितम् । तत् कोषागारे पतितं भवति चेत् किं प्रयोजनम् ? तस्मात् न मम लाभः, न वा जनानाम् । परोपकाराय तस्य उपयोगः क्रियते चेत् मया पुण्यं प्राप्यते, जनाश्च लाभान्विताः भवन्ति । एवं ननु ?'' इति ।

''भवन्तं वादेन जेतुं न मे सामर्थ्यम्'' इति वदन् ततः निर्गन्तुम् उद्युक्तः भूषणः ।

तदा कलाधरः उच्चैः हसन् – ''दामोदरसदृशः दानपात्रीभूतः अन्यः कोऽपि दृष्टः चेत् अहम् अवश्यं सूचनीयः'' इति अवदत् ।



# भाग्यं परिवर्तयितुं नार्हति कोऽपि

तुम्फाराज्यं रत्नगिरिराज्यस्य पार्श्वे एव अस्ति । तयोः परस्परं वैरम् । अतः तयोः युद्धं प्रचलति स्म पौनःपुन्येन । कदाचित् एतादृशं किञ्चन युद्धम् आरब्धम् । एतत् पूर्ववत् सामान्यं न आसीत् । निर्णायकं घोरं च आसीत् । वीरसेनः तुम्फाराज्यस्य सेनाधिपतिः । शत्रुपक्षीयं सैन्यं सुविशालम् इति सः जानाति स्म । तथापि युद्धं परित्यक्तुं न शक्यं खलु ? विना युद्धं शरणागतिप्रार्थना अपमानकरी इति तुम्फाजनाः भावयन्ति स्म ।

वीरसेनः जानाति स्म यत् जयप्राप्तिविषये मम सैनिकानां मनसि आशा नास्ति इति । सैनिकानां निराशतापूर्णानि वचनानि तृणीकृत्य सः रणरङ्गे अग्रे गच्छन् आसीत् । सैनिकानां म्लानं मुखं, स्फूर्तिरहितौ बाहू च तस्मिन् खेदं जनयन्ति स्म ।

वीरसेनः अचिन्तयत् यत् मम सैनिकेषु आत्मविश्वासपूरणाय किमपि करणीयम् एव त्वरया इति ।

रणरङ्गं प्रति गमनस्य मार्गे तैः किञ्चन मन्दिरं प्राप्तम् । मन्दिरस्था देवी तैः पूजिता । पूजायाः अनन्तरं वीरसेनः अवदत् - ''अस्माकं जयः न सम्भाव्यते इति भवत्सु बहवः चिन्तयन्ति । भगवत्याः आशयः एतद्विषये कः अस्ति इति इदानीं जानीयाम'' इति ।

सैनिकाः सर्वे कुतूहलिनः जाताः । वीरसेनः एकं नाणकं हस्तेन गृहीत्वा - ''अहम् एतत् उत्क्षिपामि । यदि राजमुद्रा ऊर्ध्वमुखतया दृश्यते तर्हि अस्माकं जयः भगवत्या अभिप्रेतः इत्यर्थः । यदि राजमुद्रा अधोभागे पतति तर्हि पराजयः भविष्यति इत्यर्थः । भाग्यं परीक्षामहे तावत्'' इति उक्त्वा नाणकम् अङ्गुल्या उत्क्षिप्तवान् ।

सर्वे सैनिकाः परमकुतूहलेन नाणकं परीक्षितवन्तः । अहो, आश्चर्यम् !! राजमुद्रा ऊर्ध्वमुखी दृश्यते !! ते नितरां सन्तुष्टाः । तेषां मुखं विकसितम् । सर्वे स्फूर्तिसम्पन्नाः जाताः । तेषां मुखे विजयप्राप्तिसूचकः आत्मविश्वासः विलसितः । ते परमोत्साहेन रणरङ्गं गताः । रत्नगिरिसैन्यं पराजितं जातम् ।

विजयप्राप्तेः अनन्तरं कश्चन दलपतिः अवदत् - ''भाग्यं परिवर्तयितुं नार्हति कोऽपि'' इति ।

''आम् । सत्यम् उक्तं भवता'' इति वदन् वीरसेनः मन्दहासं प्रकटयन् मन्दिरे भाग्यपरीक्षायै उपयुक्तं नाणकं तस्मै दर्शितवान् । नाणकस्य पार्श्वद्वये अपि राजमुद्रा एव आसीत् !!



# आन्ध्रप्रदेशीया जानपदकथा

कौतुकपूर्णः आन्ध्रप्रदेशः प्रकृतिसौन्दर्येण तान्त्रिकज्ञानेन च सम्पन्नः अस्ति । अत्रत्या भूमिः फलसमृद्धा कृषिकार्यार्थं सुयोग्या च । एतस्मिन् राज्ये मुख्यभूतं नदीद्वयम् अस्ति - गोदावरी कृष्णा चेति । एते उभे अपि नद्यौ विस्तृतकुल्याव्यवस्था-द्वारा सर्वदा अपि राज्ये उत्तमफलसमृद्धिं कल्पयतः । एतत् राज्यं 'राष्ट्रे एव अत्यधिकतया व्रीह्युत्पादकप्रदेशः' इति ख्यातम् अस्ति ।

आन्ध्रप्रदेशस्य विस्तारः २,७६,७५४ कि.मी.परिमितः अस्ति । देशे आकारेण पञ्चमं स्थानम् एतस्य । जनसङ्ख्या तु ७५,७२७,५४१ । आन्ध्रप्रदेशः १९५६ तमवर्षस्य नवेम्बरमासस्य प्रथमे दिनाङ्के अस्तित्वं प्राप्नोत् ।

एतस्य राज्यस्य पूर्वस्यां दिशि वङ्गाल-समुद्रः, पश्चिमायां दिशि कर्णाटकराज्यम्, उत्तरदिशि ओरिस्सा–महाराष्ट्र–छत्तीसगड-राज्यानि, तमिलुनाडुप्रदेशः दक्षिणभागे च वर्तन्ते । एतस्य राज्यस्य ९७२ कि.मी.-परिमितदैर्घ्ययुक्तः समुद्रतीरप्रदेशः अस्ति, यादृशः देशे अन्यस्य कस्यापि राज्यस्य नास्ति ।

एतस्य राजधानी भाग्यनगरम् । तेलुगु अत्रत्या कार्यालयीयभाषा । अत्र उप-युज्यमानाः अन्याः भाषाः - आङ्ग्ली, हिन्दी, उर्दु इत्यादयः ।

# अमूल्यः परामर्शः

वरङ्गल्प्रदेशस्य अधिपतिः प्रतापरुद्रः कदाचित् पुत्रस्य रामलिङ्गस्य विषये असन्तुष्टः जातः । राजपदवीम् अलङ्कर्तुं पुत्रस्य अतिसूक्ष्मत्वं कोमलत्वं च बाधकम् इति सः अचिन्तयत् । ''भवत्याः कारणतः एव सः तथा जातः अस्ति । राजा कठोरः भवेत् । तेन कठिननिर्णयाः स्वीकरणीयाः भवन्ति । परन्तु एषः मातृप्रियः तत्सर्वं कर्तुं सर्वथा न शक्नोति'' इति पत्नीं नारायणाम्बाम् उक्तवान् सः ।

राज्ञी नारायणाम्बा एतत् अनङ्गीकुर्वती उक्तवती - ''करुणालुः राजा एव प्रजानां कष्टम् अवगन्तुम् अर्हति । शासने कुत्र कठिनता स्यात्,



कुत्र च मृदुता आश्रयणीया इति तु अनुभव-बलात् ज्ञायते । यदि रामलिङ्गस्य अनुभवः वर्धताम् इति भवान् इच्छति तर्हि तं प्रजाभिः मेलितुं प्रेषयतु'' इति ।

'एषः उत्तमः उपायः' इति राजा चिन्तितवान् । सः रामलिङ्गम् अकथयत् - ''अचिरात् एव भवता सिंहासनम् आरोढव्यं भविष्यति । ततः पूर्वं भवता जगतः रीतिनीतयः ज्ञातव्याः इति मदीया अपेक्षा । अतः भवता जनैः सह वसता अनुभवः प्राप्तव्यः'' इति ।

एतत् अङ्गीकृत्य रामलिङ्गः प्रासादात् निर्गत्य नगरं प्रविष्टवान् । सः यदा मध्याह्नस्य विश्रान्त्यर्थं स्थितः तदा तेन समीपस्थात् कुटीरात् उच्चध्वनिना क्रियमाणं सम्भाषणं श्रुतम् ।

''अहं यत् प्राप्नोमि तत्सर्वं भवत्यै दत्तवान् अस्मि । मत्समीपे इतोऽपि अधिकं किमपि नास्ति'' इति पुरुषेण उक्तम् ।

''भवतः वेतनम् उदरम्भरणमात्राय अलम् । इदानीं मातुः अस्वास्थ्यम् अस्ति । तत्कारणतः औषधादिनिमित्तं व्ययः करणीयः एव खलु ? कुतः धनम् आनयानि अहम् ?'' इति काचित् महिला पृष्टवती ।

तदा पुरुषः दीर्घं निःश्वसन् अवदत् - ''मम समीपे धनं नास्ति एव । परन्तु अहं मम ज्ञानस्य प्रतीकरूपेण कानिचन समीचीनानि उपदेश-वचनानि दातुं शक्नोमि । तेषां विक्रयणं यदि क्रियेत तर्हि लक्षाधिकसुवर्णनाणकानि प्राप्तुं शक्येरन् । तस्मात् अस्माकं सर्वाः समस्याः परिहृताः भवेयुः'' इति ।

''कः ज्ञानं क्रीणीयात् ?'' इति महिला पृष्टवती ।

परन्तु अर्चकः उत्तरं किमपि अदत्त्वा



काष्ठस्य उपरि किमपि लिखित्वा तस्यै दत्त्वा - ''एतेषां विक्रयणं करोतु'' इति उक्तवान् ।

राजकुमारः तयोः कृते साहाय्यं कर्तुम् इष्टवान् । अतः यदा सा बहिः आगतवती तदा तस्याः समीपं गत्वा सः उक्तवान् - ''मातः ! किञ्चित् साहाय्यम् अपेक्षितम् । मया किञ्चित् बोधनम् अपेक्ष्यते'' इति ।

महिला तं सन्तोषेण दृष्ट्वा उक्तवती - ''मम समीपे काष्ठखण्डः अस्ति । तस्य उपरि पङ्क्तित्रयात्मकं बोधनम् अस्ति । परन्तु तस्य मूल्यं लक्षाधिकसुवर्णनाणकमितम्'' इति ।

राजकुमारः तत् बोधनकाष्ठं स्वीकृत्य तस्यै वज्राङ्गुलीयकं दत्त्वा - ''एतत् लक्षाधिकसुवर्ण-नाणकमूल्यम् अर्हति'' इति उक्तवान् ।

अनन्तरं सः काष्ठखण्डस्थं पठितवान् । तत्र एवं लिखितम् आसीत् -



# कलाकौशलम्

आन्ध्रप्रदेशस्य राजानः वैविध्यमयीनां करकुशलकलानां कृते प्रोत्साहं दत्तवन्तः । 'कलम्करि'नामिका अतिविशिष्टा कला एतस्मिन् राज्ये एव जन्म प्राप्नोत् । वस्त्रस्य उपरि क्रियमाणा विशिष्टा कला एषा । एतत् लेखन्याः कूर्चस्य वा साहाय्येन क्रियते । सस्यजन्यवर्णाः एव अत्र उपयुज्यन्ते । चित्ररचनाय विषयाः अस्माकं पुराणग्रन्थेभ्यः स्वीकृताः भवन्ति प्रायः । कलम्करिकला इदानीं भित्तिषु, आच्छादकेषु, धरणवस्त्रेषु चापि द्रष्टुं शक्या । एतस्य अभ्यासः अध्ययनं च प्रमुखतया श्रीकालहस्तिक्षेत्रे प्रचलति ।

अन्या एका विशिष्टा कला अत्र वर्तते – कोण्डपल्लिपाञ्चालिकानिर्माणं नाम । एताः सामान्याः पाञ्चालिकाः राज्ये उपलभ्यमानैः मृदुकाष्ठैः निर्मिताः भवन्ति । काष्ठचित्राणि उज्ज्वलवर्णैः चित्रितानि भवन्ति ।

भाग्यनगरं (हैदराबाद्) मौक्तिककङ्कणानां निमित्तं बहु प्रसिद्धम् अस्ति । काचककङ्कणानि वैविध्यमयानि विशेषसौन्दर्ययुक्तानि च भवन्ति । एतेषां विन्यासः हस्ताभ्यासबलात् एव कृतः भवति । भाग्यनगरस्य कलाकाराः मौक्तिकानां सज्जीकरणे विन्यासकरणे च अत्यन्तं निपुणाः । धातुभिः निर्मितानि आभरणानि अपि अस्मिन् राज्ये बहु प्रसिद्धानि सन्ति ।

''यदि अपरिचितस्थले रात्रौ वासः करणीयः भविष्यति तर्हि निद्रा सर्वथा न करणीया ।''

''भवान् धनिकः सन् धनिकबन्धोः मेलनार्थं यदि गच्छति तर्हि सहार्दं स्वागतं प्राप्नोति । परन्तु भवान् यदि दरिद्रः सन् धनिकबन्धुगृहं प्रविशति तर्हि बान्धवाः भवन्तं प्रतिप्रेषयन्ति, यतः कोऽपि धनिकः दरिद्रबन्धोः सत्कारं कर्तुं न इच्छति ।''

''यदि यत्किञ्चित् कार्यं कष्टकरम् अपायकरं च इति भासते तर्हि तत् कार्यं निर्भयतया पूर्णपरिश्रमेण च क्रियताम् ।''

राजकुमारः जागरूकतया तत् स्वपार्श्वे स्थापितवान् । देशाटनं कृत्वा केषाञ्चित् दिनानाम् अनन्तरं सः राजप्रासादं प्रत्यागतः ।

तदा तस्य पिता तम् आहूय पृष्टवान् – ''भवान् किं ज्ञातवान् अस्ति ? भवान् कीदृशं प्रापञ्चिकज्ञानं प्राप्तवान्'' इति ।

''अहम् अमूल्यं ज्ञानं क्रीतवान् अस्मि'' इति उक्तवान् राजकुमारः ।

''ज्ञानं किं क्रीतं भवता ?'' इति आश्चर्यमिश्रितस्वरेण पृष्टवान् प्रतापरुद्रः ।

रामलिङ्गः काष्ठस्थानि वाक्यानि दर्शितवान् । तानि दृष्टवतः राज्ञः क्रोधः नितरां प्रवृद्धः । सः क्रोधेन अतर्जयत् – 'रे ! ज्ञानस्य क्रयणं न शक्यम् इत्यपि किं भवान् न जानाति ? महामूर्ख ! ज्ञानस्य क्रयणं कुर्वन्

भवान् निश्चयेन वञ्चितः जातः । ज्ञानं न विक्रयणयोग्यम् इत्यपि अजानन् भवान् कथं राजा भवेत् ? निर्गच्छतु इतः । मम दृष्टिगोचरः कदापि न भवतु'' इति ।

खिन्नः सन् रामलिङ्गः ततः निर्गतवान् । सः राज्यात् बहिः गतवान् । सः रात्रेः पूर्वम् एकं लघुनगरं प्राप्तवान् । सः प्रवासिमन्दिरे रात्रिं यापयितुम् इष्टवान् । यदा एतेन प्रवासि-मन्दिरं प्रविष्टं तदा तत्रत्यः रक्षकः तं नखशिखान्तं दृष्टवान् । सः रामलिङ्गेन धृतम् अमूल्यं वस्त्राभरणम् अपि अवलोकितवान् । सः अचिन्तयत् – 'एतं रात्रौ मारयित्वा एतदीयानि वस्त्राभरणादीनि वशीकरिष्यामि' इति ।

अतः सः राजकुमारं सहर्षं स्वागतीकृतवान् । तम् उत्तमप्रकोष्ठं प्रति अपि नीतवान् । रामलिङ्गः यदा निद्रां कर्तुम् उद्युक्तः तदा सः काष्ठ-फलकस्थानि वाक्यानि स्मृतवान् । सः पुनरपि तानि वाक्यानि पठितवान् ।

'यदि अपरिचितस्थले रात्रौ वासः करणीयः भविष्यति तर्हि निद्रा सर्वथा न करणीया ।'

राजकुमारः एतस्य वाक्यस्य प्रयोजनं स्वीकर्तुम् इष्टवान् । सः जलं मुखस्य उपरि परिषिच्य जागरूकः सन् उपविष्टवान् । मध्य-रात्रस्य अनन्तरं प्रवासिमन्दिरस्य रक्षकः खड्गं गृहीत्वा मन्दं विना शब्दं प्रकोष्ठं प्रविष्टवान् । परन्तु राजकुमारः तम् अनुक्षणं गृहीतवान् । तदा भीतः सः रक्षकः तस्य पादौ गृहीत्वा क्षमां प्रार्थितवान् । राजकुमारः क्षमां दर्शयित्वा नगरात् बहिः गतवान् ।

सः ततः पितृव्यस्य गृहं गतवान् । गृहात् बहिः गतस्य रामलिङ्गस्य बहवः सप्ताहाः अतीताः आसन् । निरन्तरं प्रयाणं कृतम् इति कारणतः सः मलिनकायः दृश्यते स्म । अतः सः यदा पितृव्यस्य प्रासादं प्रविष्टवान् तदा पितृव्यः तं न अभिज्ञातवान् एव ।

''भवान् मम भ्रात्रीयः न । भोः रक्षकाः, एतं दरिद्रं बहिः प्रेषयन्तु भवन्तः'' इति उक्तवान् पितृव्यः ।

बहिः गमनसमये रामलिङ्गः काष्ठफलकस्थां द्वितीयां सूचनां स्मृतवान् । सा च आसीत् – ''भवान् धनिकः सन् धनिकबन्धोः मेलनार्थं यदि गच्छति तर्हि सहार्दं स्वागतं प्राप्नोति । परन्तु भवान् यदि दरिद्रः सन् धनिकबन्धुगृहं प्रविशति तर्हि बान्धवाः भवन्तं प्रतिप्रेषयन्ति, यतः कोऽपि धनिकः दरिद्रबन्धोः सत्कारं कर्तुं न इच्छति'' इति ।

राजकुमारः तेषां वाक्यानाम् अर्थम् अव-गतवान् । सः कानिचन आभरणानि विक्रीय नूतनानि वस्त्राणि क्रीतवान् । स्नानादिकं कृत्वा विविधैः वस्त्राभरणैः आत्मानम् अलङ्कृत-वान् । इदानीं सः राजकुमारः इव दृश्यते स्म । सः उपायनानि स्वीकृत्य पुनरपि पितृव्यस्य





# बालाजेः वासस्थानम्

आ बहुभ्यः शतकेभ्यः तिरुपतिः यात्रार्थिनां पवित्रं यात्रास्थानम् अस्ति । कलियुगस्य देवः वेङ्कटेश्वरः 'बालाजी' इति प्रसिद्धः अस्ति । तस्य निवासस्थानं तिरुमलम् । तिरुमलं सप्तानां गिरीणाम् उपरि पूर्वशैलप्रदेशे नल्लमलैपरिसरे वर्तते । अतः अत्रत्यः देवः अपि 'सप्तगिरिवासी' इति प्रसिद्धः । देवालयस्य इतिहासः नाद्यापि सुस्पष्टः अस्ति । एतस्य संरक्षणं पल्लवैः चोलैः पाण्ड्यैः विजयनगरस्य प्रभुभिः मैसूरुसंस्थानाधीशैः च कृतम् अस्ति । मुख्यदेवालयः दक्षिणभारतीयदेवालयविन्यासस्य अत्युत्तमम् उदाहरणम् । गर्भगृहस्य उपरि स्थितं विमानं ध्वजस्तम्भः च सुवर्णपटलेन अलङ्कृतः अस्ति ।

प्रासादं प्रविष्टवान् । तस्मिन् समये पितृव्यः तम् अभिज्ञाय आदरेण स्वागतीकृतवान् ।

कानिचन दिनानि तत्र यापयित्वा रामलिङ्गः ततः प्रस्थितवान् । मार्गे सः उच्चैः रोदनं कुर्वन्तं एकं कुम्भकारं दृष्टवान् ।

सः पृष्टवान् - ''किमर्थं रुद्यते ?'' इति ।

''मम पुत्रेण राजकुमारी वरणीया अस्ति अद्य'' इति दुःखेन उक्तवान् कुम्भकारः ।



''एषः तु सन्तोषस्य विषयः खलु ?'' इति आश्चर्येण पृष्टवान् राजकुमारः ।

''न ! दुःखस्य विषयः एषः । अस्मिन् राज्ये प्रतिदिनं राजकुमार्याः विवाहः भविष्यति । प्रतिरात्रि अपि तस्याः पतिः आश्चर्यकररीत्या मरणं प्राप्नोति । अद्य मम पुत्रस्य पर्यायः । सः सजीवः न प्रत्यागमिष्यति इति जानामि अहम्'' इति रुदन् एव उक्तवान् कुम्भकारः ।

तदा काष्ठफलकस्था तृतीया सूचना राजकुमारस्य स्मृतिपटलम् आगता । सा च एवम् आसीत् - ''यदि यत्किञ्चित् कार्यं कष्टकरम् अपायकरं च इति भासते तर्हि तत् कार्यं निर्भयतया पूर्णपरिश्रमेण च क्रियताम् ।''

'कुम्भकारस्य पुत्रस्य रक्षणं मम कर्तव्यम् अस्ति' इति रामलिङ्गः चिन्तितवान् । अतः सः उक्तवान् - ''राजकुमार्याः विवाहः मया सह भवतु'' इति । कुम्भकारः एतं प्रस्तावम् अङ्गीकृतवान् । तदनन्तरं रामलिङ्गस्य विवाहः



सुन्दर्या राजकुमार्या सह अभवत् ।

तस्यां रात्रौ यदा राजकुमारी निद्रितवती तदा रामलिङ्गः जागरूकः आसीत् । मध्यरात्रे सर्पद्वयं शय्यायाः अधस्तात् आगतम् । राजकुमारः खड्गहस्तः सन् सर्पयोः उपरि आक्रमणं कृत्वा तौ मारितवान् । एतौ कुतः आगतौ इति सः यदा अवलोकितवान् तदा सः ज्ञातवान् यत् शय्यायाः अधः सर्परन्ध्रम् अस्ति इति ।

अनन्तरदिने जामातरं सजीवं दृष्ट्वा राजा आश्चर्यचकितः जातः । तदा रामलिङ्गः उक्तवान् – ''यदा एतस्य प्रासादस्य निर्माणं कृतं तदा किञ्चन सर्परन्ध्रं नाशितम् इति चिन्तयामि । एतौ सर्पौ प्रतीकारं स्वीकुर्वन्तौ आस्ताम् । इदानीं तस्याः विपदः वयं मुक्ताः'' इति ।

रामलिङ्गः राजकुमारः इति ज्ञातवतः महाराजस्य सन्तोषः द्विगुणितः जातः । सः पुत्रीं जामातरं च वरङ्गल्राज्यं प्रति प्रेषितवान् । राजा प्रतापरुद्रः राज्ञी च एतौ दृष्ट्वा रोमाञ्चितौ जातौ । रामलिङ्गस्य कथां श्रुत्वा प्रतापरुद्रः स्वदोषम् अङ्गीकुर्वन् उक्तवान् – ''भवता आनीतात् ज्ञानात् भवान् निश्चयेन लाभान्वितः अभवत् । तानि वाक्यानि लक्षाधिकरूप्यकमूल्यम् अर्हन्ति इत्यत्र नास्ति सन्देहः'' इति ।

# दर्शनीयानि स्थलानि

यात्रास्थलानि अतिरिच्य आन्ध्रप्रदेशे अन्यानि अपि बहूनि प्रेक्षणीयानि स्थलानि सन्ति । भारतस्य पञ्चममहानगरत्वेन ख्याते भाग्यनगरे ऐतिहासिकमहत्त्वयुक्तानि स्थलानि बहूनि सन्ति । तेषु चार्मिनार्, गोलकोण्ड, सलार्जङ्ग्म्यूसियम्, उस्मानिया-विश्वविद्यालयः इत्यादयः अन्यतमाः सन्ति । यमलनगराभ्यां हैदराबादसिकन्दराबादाभ्यां संयुक्ता नगरी एव आन्ध्रप्रदेशराज्यस्य राजधानी अस्ति । एते नगरे हुसैन्सागर-नामकेन सरोवरेण योजिते स्तः ।

विशाखपत्तनम् अन्यदेकं यात्रास्थलम् । अत्रत्यं समुद्रतीरं बहून् यात्रार्थिनः आकर्षति । एतत् राज्यम् अराकुखातः, टैडाक्याम्प्, बोरा गुहाः इत्यादीनां प्रेक्षणीयकेन्द्राणां मूलस्थानम् अस्ति ।

नागार्जुनसागरः, भद्राचलः, लेपाक्षी, मन्त्रालयः, पुट्टपर्ति, अमरावती, एतिफोतलाजलप्रपातः इत्यादीनि अन्यानि कानिचन प्रसिद्धानि आन्ध्रीयाणि प्रेक्षणीय-केन्द्राणि ।

# भारतम् अवगम्यताम्

जनवरीमासस्य विशेषः नाम तस्मिन् मासे २६तमे दिनाङ्के गणतन्त्रदिनोत्सवस्य यात्रा प्रचलिष्यति । तत्र देशेन तान्त्रिकाभिवृद्धिः या आसादिता, उद्यम-वाणिज्य-कृषि-स्वास्थ्य-शिक्षणक्षेत्रेषु प्रगतिः या साधिता सा प्रदर्श्यते प्रतिवर्षम् । एतस्य मासस्य प्रश्नाः भारतस्य प्रगतिम् अधिकृत्य सन्ति । एतेषाम् उत्तरदानेन स्वज्ञानं प्रमाणीकुर्वन्तु ।

१. इदानीम् अस्माकम् अणुशक्त्युत्पादनसामर्थ्यं कियत् अस्ति ?

२. कस्मिन् वर्षे भारतेन 'इन्साट्-१ बि'नामकः उपग्रहः यशस्वितया अन्तरिक्षं प्रति प्रेषितः ?

३. अतिविशाला अत्याधुनिकी 'सागरकन्या'नामिका सागरान्तरालसंशोधननौका इदानीं भारतदेशेन प्राप्ता अस्ति । सा च भारतेन कस्मात् देशात् क्रीता ?

४. भूतलात् भूतलं प्रति गन्तुम् अर्हस्य भारतीयस्य क्षेपण्यस्त्रस्य नाम किम् ?

५. भारतेन कश्चन पुरुषः, काचित् महिला च अन्तरिक्षं प्रति प्रेषितौ । तयोः नाम किम् ? किमर्थं तौ तत्र प्रेषितौ ?

६. भारते कदा शतमानाधारिता मुद्राव्यवस्था अङ्गीकृता ?

७. कदा विश्वविद्यालयानुदानायोगस्य (यु.जि.सि.) स्थापनं जातम् ?

८. भारतस्य अत्युन्नतं भवनं कुत्र निर्मितम् ? तच्च कदा ?

*(उत्तराणि अग्रिमे मासे)*

## *'डिसेम्बर्'मासस्य प्रश्नानाम् उत्तराणि*

*१. बिर्लाभवने प्रार्थनासभायाः वेदिकायाः समीपे अण्वस्त्रस्फोटः जातः ।*

*२. तद्दिने लेफ्टिनेण्ट् जनरल् के. एम्. कारियप्पः भारतस्य सैन्यस्य प्रमुखः अभवत् ।*

*३. ७४ पक्षाः । तेषु १४ पक्षाः राष्ट्रियाः आसन् ।*

*४. षड्वारम् । सि. डि. देशमुखः ।*

*५. १९५४ तमे वर्षे प्रयागक्षेत्रे फेब्रवरीमासे । ५०० जनाः प्राणैः वियुक्ताः जाताः ।*

*६. १९५४ तमे वर्षे । डा॰ एस्. राधाकृष्णः, सि. राजगोपालाचार्यः, सि. वि. रामन् च ।*

*७. सचिन् नागः । शतमीटरात्मकतरण-स्पर्धायाम् ।*

*८. मुम्बयीनगरीयः अर्च्बिषप् वेलेरियन् ग्रेसिया । १९५३ तमवर्षस्य जनवरी-मासस्य १२ दिनाङ्के ।*

*९. मध्यभारतम् । इन्दोर् ।*

*१०. श्री रमणमहर्षिः, श्री अरविन्दो च ।*



# विघ्नेश्वरः

कृष्णस्य वचनं श्रुत्वा मृदङ्गकेसरी हसन् उक्तवान् - ''किं साधारणैः वचनैः मां वञ्चयितुं प्रयत्नः क्रियते भवता ? एतत् कदापि न शक्यते । अद्य तु निर्णीतं भवेत् एव यत् भवतः वेणुगानं श्रेष्ठम्, उत मम मृदङ्गवादनम् इति'' इति ।

तदा कृष्णः कम्पमानः मुरलीगानम् आरब्धवान् । मृदङ्गकेसरी अपि मृदङ्गवादनम् आरब्धवान् । श्रीकृष्णः यमनकल्याणीरागम् आरब्धवान् । मृदङ्गकेसरी आश्चर्यचकितः जातः । झटिति एव श्रीकृष्णः हंसध्वनिरागस्य आलापनम् आरब्धवान् । एतं रागं श्रुत्वा अत्युत्साहेन विघ्नेश्वरः मृदङ्गवादनं त्यक्त्वा महता आनन्देन नृत्यम् आरब्धवान् ।

कृष्णः यदा विभिन्नगीतानां द्वारा हंसध्वनिरागस्य आलापनस्य विस्तारं कृतवान् तदा मृदङ्गकेसरिरूपं परिवर्त्य विघ्नेश्वरः भूत्वा शुण्डां चालयन् ताण्डवनृत्यम् आरब्धवान् । तस्मिन् समये तस्य मृदङ्गस्य उपरि मूषकः नृत्यम् आरब्धवान् ।

विघ्नेश्वराय हंसध्वनिरागः विशेषतः रोचते स्म । तं श्रुत्वा सः अत्यन्तं पुलकितः जातः । सन्तोषेण ताण्डवनृत्यं कुर्वन् सः पतितः अभवत् । तत् दृष्ट्वा दिग्भ्रान्तः कृष्णः मुरलीवादनं स्थगयित्वा शिरोभ्रमणात् पतन्तं विघ्नेश्वरम् उक्तवान् - ''पार्वतीनन्दन, अहं यदि वादनम् अनुवर्तयामि तर्हि भवान् पुनः अधोमुखः सन् पतेत् । तदा भवतः माता कोपेन मह्यं शापं दद्यात् । अतः एव एषोऽहं गानं स्थगयन् अस्मि । कृपया मां क्षाम्यतु



लम्बोदर !'' इति ।

''हे कृष्ण ! अहं भवतः मुरलीगानं श्रोतुम् एव अत्र आगतः अस्मि । आवयोः एतत् कृष्णविनायकीयं मेलनमेव सुन्दरकाण्डः अस्ति'' इति उक्तवान् विघ्नेश्वरः ।

''विघ्नेश्वर ! भवतः वाहनस्य उपरि मृदङ्गं पतितं खलु'' इति वदन् कृष्णः प्रीत्या मूषकस्य पृष्ठं स्पृष्टवान् ।

''कृष्ण ! कंसस्य अन्तिमः समयः सन्निहितः अस्ति । धनुर्यागनिमित्तम् आह्वानाय अक्रूरः तेन प्रेष्यते । सन्तोषेण गत्वा विजयी सन् आगच्छतु'' इति उक्तवान् विघ्नेश्वरः ।

''एतत्सर्वं भवतः कृपया भविष्यति'' इति वदन् कृष्णः श्रद्धया विघ्नेश्वरं नमस्कृतवान् ।

तदा विघ्नेश्वरः – ''भवान् तु अवतारपुरुषः अस्ति । एतत्सर्व मम कृपया नैव, अपि तु भवतः लीलया एव । अस्मिन् समये अर्का कुब्जारूपेण भवन्तं निरीक्षमाणा भवति । तस्याः विषये भवतः अनुग्रहः भवतु'' इति उक्त्वा मूषके उपविश्य आकाशे अन्तर्हितः जातः ।

ततः अक्रूरः कृष्णबलरामयोः रथं मथुरापुरीं प्रति नीतवान् । तदा काचित् कुब्जारूपेण पुरतः आगत्य कृष्णस्य चरणारविन्दयोः चन्दनं लेपयित्वा नमस्कृतवती । कृष्णबलरामयोः कण्ठे पुष्पमालाम् अर्पितवती सा । तदा कृष्णः स्वहस्ताभ्यां तां कुब्जाम् उत्थापितवान् । तदा सा कुब्जरूपात् मुक्ता सती अप्सराः भूत्वा देवलोकं गतवती ।

कंसः कृष्णस्य संहारार्थं बहुविधकपटमायाजालं रचितवान् आसीत् । परन्तु कृष्णः तत्सर्वं विफलं कृत्वा तं सिंहासनात् अधः पातयित्वा तस्य वधं कृतवान् ।

देवकीं, वसुदेवम्, उग्रसेनं चापि कारागृहात् मोचयित्वा कृष्णः उग्रसेनं मथुरासिंहासने उपवेशितवान् ।

कृष्णबलरामौ ज्येष्ठौ जातौ । कृष्णः अनेकेषां दुष्टानां राक्षसानां च संहारं कृत्वा समुद्रजलराशिं दूरम् अपसार्य दुर्भेद्यं द्वारकानगरं निर्मितवान् । बलरामं च यादवानां नायकः इति घोषितवान् ।

एतदनन्तरं कृष्णः रुक्मिणीं वृतवान् । समस्तसम्पदः स्वामी भूत्वा अपि कृष्णः पूर्ववत् धेनूः चारयन् दोहनादिकं कुर्वन् गोपालकृष्णरूपेण द्वारकायां स्थितवान् ।

द्वारकानगरस्य एकस्मिन् कोणे सत्राजित्नामकः कश्चित्, प्रमुखः राजा इव सुखभोगान् अनुभवति स्म । सः आत्मानं साभिमानं

सूर्यवंशीयं कथयन् श्रद्धया सूर्योपासनं करोति स्म । एतस्मात् प्रसन्नः सूर्यः तस्मै स्यमन्तकमणिनामकं महत् रत्नं दत्तवान् । स्यमन्तकमणितः महता प्रमाणेन सुवर्णं प्राप्यते स्म ।

सत्राजित् प्रमुखव्यक्तीः आहूय स्यमन्तकमणिं प्रदर्श्य तस्मात् प्रभूतं धनं सम्पादयति स्म । कदाचित् सः कृष्णम् अपि स्वस्य प्रासादं प्रति निमन्त्रितवान् । परन्तु कृष्णः कदापि न आगतः एव । कुपितः सत्राजित् कृष्णाय ईर्ष्यति स्म । यद्यपि सः कृष्णस्य महिम्नः विषये विविधाः कथाः शृणोति स्म, तथापि सः तं यादवप्रमुखमात्रं मन्यते स्म, न तु ततोऽपि श्रेष्ठम् ।



सत्राजितः सत्यभामानामिका अपूर्वरूपवती पुत्री आसीत् । स्यमन्तकमणिः यथा प्रसिद्धः तथैव सत्यभामायाः सौन्दर्यमपि जगति प्रसिद्धम् आसीत् । जरासन्धसदृशः महावीरः अपि तस्याः प्राप्तिविषये उत्सुकः आसीत् ।

विघ्नेश्वरस्य विषये सत्यभामायाः मनसि महती श्रद्धा आसीत् । सा प्रतिविनायकचतुर्थीदिनं विघ्नेश्वरं भक्त्या पूजयित्वा 'कृष्णं पतिरूपेण ददातु' इति प्रार्थयति स्म । यदा कृष्णः भवनस्य उपरि स्थितवान् भवति तदा तस्य मनः आक्रष्टुम् एव सत्यभामा मार्गे इतस्ततः अटति स्म । परन्तु कृष्णः तां कदापि न पश्यति स्म । एतस्मात् नितराम् खिन्ना सत्यभामा विघ्नेश्वरं सर्वदा प्रार्थयति स्म - 'मम मनःकामनां पूर्णां करोतु' इति

सत्राजित् स्वपुत्र्याः मनोभिलाषं जानन् अपि अजानन् इव व्यवहरति स्म । एकस्मिन् दिने विघ्नेश्वरं श्रद्धया प्रार्थयन्तीं सत्यभामां दृष्ट्वा सः उक्तवान् - ''भगवतः सूर्यस्य अनुग्रहे पर्याप्तमात्रेण सत्यपि किमर्थं वा एतादृशाः अल्पसामर्थ्यवन्तः देवाः पूज्यन्ते?'' इति ।

एतत् श्रुत्वा झटिति उत्थाय सत्यभामा उक्तवती - ''पितः ! कदापि एवं न वदतु । मम मनोभिलाषं पूर्णं कर्तुं विघ्नेश्वरः एव समर्थः अस्ति इति ।''

''को वा भवत्याः मनोभिलाषः ? रुक्मिण्याः पतिः परिणेतव्यः इति खलु भवत्याः प्रयत्नः ? अन्यस्याः पतिं परिणीय किं तस्याः सम्पत्तिं विभज्य स्वीकर्तुम् इच्छति ?'' इति सत्राजित् पृष्टवान् ।

''अन्यस्याः सम्पत्तेः विभज्य स्वीकारः कथम् ? कृष्णः मम एव सम्पत्तिः । तम् अहं मम आधीन्ये एव स्थापयिष्यामि'' इति उक्तवती सत्यभामा ।

सत्यभामायाः प्रतिनिविष्टतास्वभावं



भवती जानाति ? स्यमन्तकमणिः दातव्यः इति सः उक्तवान् । 'यदि स्यमन्तकमणिः मम समीपे भवेत् तर्हि सर्वेषां हितं भवेत्' इति सः उक्तवान्'' इति उक्तवान् सत्राजित् ।

तदा सत्यभामा कोपेन - ''मत्तः अपि स्यमन्तकमणिः एव भवतः प्रियतमः जातः ननु ?'' इति वदन्ती यदा सेविकया सह बहिः गन्तुम् उद्युक्ता तदा सत्राजित् सान्त्वनस्वरेण उक्तवान् - ''वत्से ! तथा न चिन्तयतु । अहं कृष्णस्य दुराशतां दृष्ट्वा आश्चर्यचकितः अस्मि, तावदेव'' इति ।

''सः एतत् तु न उक्तवान् यत् स्यमन्तकमणिद्वारा यत् सुवर्णं प्राप्तमस्ति तदपि नेष्यामि इति । एवं चेत् दुराशता वा कुतः ? पितः ! यदा कृष्णपरमात्मा प्रार्थयति तदा सन्तोषेण मणेः दानस्य अपेक्षया अन्यत् उत्तमकार्यं किम् अस्ति ?'' इति सत्यभामा पृष्टवती ।

तदा सत्राजित् क्रोधेन कम्पमानः उत्थाय उक्तवान् - ''नैव दास्यामि । अहं यावत् जीवामि तावत् कस्मैचिदपि न दास्यामि तं मणिम् । एषः मणिः मम प्राणतुल्यः अस्ति । मम सर्वस्वम् अस्ति'' इति ।

एतत् श्रुतवत्याः सत्यभामायाः मुखं रक्तवर्णं जातम् । सा उत्थाय उक्तवती - ''मणिः भवतः सर्वस्वं खलु ? भवतु । कृष्णस्य तु स्यमन्तकमणिः प्रियः, उत अहम् इति न ज्ञायते । तत् तु तस्य व्यवहारः एव प्रमाणीकुर्यात्'' इति । एवं वदन्ती तीक्ष्णदृष्ट्या पितरं पश्यन्ती सा ततः निर्गतवती । तदनन्तरदिनेषु एव विनायकचतुर्थी आगता । पूर्ववत् सत्यभामा विघ्नेश्वरं भक्त्या पूजयित्वा पद्भ्यां

सत्राजित् सम्यक् जानाति स्म एव । तथापि तां लघुबालिकां मन्यमानः सः तूष्णीम् अतिष्ठत् ।

अनन्तरदिने कृष्णः सत्राजितः समीपम् आगतः । कृष्णम् आक्रष्टुं सत्यभामा सर्वालङ्कारयुक्ता सती यदा सन्तोषेण सभाभवनं प्रविष्टवती तदा कृष्णः ततः निर्गतवान् ।

सत्राजित् सायङ्कालपर्यन्तं मणिं हस्तेन गृहीत्वा कृष्णस्य दिशि निराशतया पश्यन् आसीत् । तदा तत्र आगता सत्यभामा पृष्टवती - ''पितः, भवान् किमर्थं खिन्नः अस्ति ? अत्र आगतः सः किम् उक्तवान् ? मम विषये च सः किं पृष्टवान् ?'' इति ।

''सः भवतीं परिणेतुम् इष्टवान् । सः यदि तावत् एव अयाचिष्यत् तर्हि अहं चिन्तां न अकरिष्यम् । सः किम् उक्तवान् इति किं

द्वारकानगरं प्रति प्रस्थितवती ।

तस्मिन् सायङ्काले आकाशे सर्वत्र अन्धकारः प्रसृतः । कृष्णः क्षीरदोहनं कुर्वन् आसीत् । झटिति अन्धकारः निर्गतः । सर्वत्र कौमुदीप्रकाशः प्रसृतः । क्षीरे चन्द्रस्य प्रतिबिम्बं कृष्णेन अकस्मात् दृष्टम् । अनुक्षणमेव पुनः सर्वत्र अन्धकारः प्रसृतः ।

विनायकचतुर्थीदिने प्राप्तात् चन्द्रदर्शनात् कृष्णः व्याकुलः जातः । पूजागृहं प्रविश्य विघ्नेश्वरस्य पुरतः नेत्रे निमील्य उपविश्य सः निवेदितवान् – ''हे देव ! मया प्रतिबिम्बमात्रं दृष्टम् । एषः भवतः कृपाविशेषः'' इति ।

यदा कृष्णः ध्यानमग्नः आसीत् तदा विघ्नेश्वरस्य मूर्तितः एवं शब्दः श्रुतः – ''हे कृष्ण ! भवान् उद्देशपूर्वकं न दृष्टवान् । अतः दोषारोपः भवति चेत् अपि स्वयं सः निवारितः भवति, यथा अन्धकारः झटिति अदृश्यः जातः तथा । एतत्सर्वं भवतः हितार्थमेव जातम् अस्ति इति जानातु'' इति ।

एतत् श्रुत्वा कृष्णः नेत्रे उन्मील्य उक्तवान् – ''देव ! एतत्सर्वं भवतः लीला वर्तते'' इति ।

तस्मिन् समये रुक्मिणी पूजामन्दिरं प्रविशन्ती विघ्नेश्वरस्य पुरतः उपविश्य जपं कुर्वन्तं कृष्णं दृष्ट्वा आश्चर्यचकिता जाता । सा कृष्णम् उक्तवती – ''आर्यपुत्र ! भवान् विघ्नेश्वरेण सह वार्तालापं कुर्वन् अस्ति इति भाति'' इति ।

तदा कृष्णः उत्तरं दत्तवान् – ''विनायकचतुर्थीदिने बाल्ये मां पालितवती यशोदा यद्यद् उक्तवती तत्सर्वं स्मरणपथम् आयाति । सः एव विषयः, तावदेव'' इति ।

''स्वामिन् ! तानि बाल्यवचनानि माम् अपि श्रावयतु'' इति रुक्मिणी पृष्टवती ।

तदा कृष्णः उक्तवान् – ''यशोदामाता विनायकचतुर्थीदिने यदा क्षीरदोहनं कुर्वती



आसीत् तदा अहं क्षीरे चन्द्रस्य प्रतिबिम्बं दृष्टवान् । एतत् ज्ञात्वा यशोदा दुःखेन एवम् उक्तवती – 'पुत्र । भवतः विषये कीदृशः दोषारोपः भविष्यति इति अहं न जाने । ज्येष्ठत्वे प्राप्ते सत्यपि आरोपमुक्तता तु न भविष्यति' इति उक्तवती आसीत् सा । अहम् एवम् उत्तरं दत्तवान् आसम् – 'मातः ! पुनः मया क्षीरे चन्द्रः न द्रक्ष्यते । तथापि कथं वा दोषारोपः भवितुम् अर्हति ?' इति ।''

''एतत् मां वदतु – कीदृशः दोषारोपः जातः आसीत् तदा ?'' रुक्मिणी पृष्टवती ।

''अग्रजः बलरामः उक्तवान् आसीत् यत् अहं मृत्तिकां खादितवान् इति ।''

''भवान् तु चन्द्रं न दृष्टवान् खलु ? भवान् द्रष्टुम् इच्छति चेत् अपि तत् असाध्यम् आसीत् । यतः सर्वत्र अन्धकारः प्रसृतः आसीत् । अहा ! अहम् एकं विषयं वक्तुमेव विस्मृतवती । सत्राजितः गृहस्य मणिः अस्माकं गृहम् आगतः अस्ति'' इति रुक्मिणी उक्तवती ।

''कथं वा स्यमन्तकमणिः अस्माकं गृहे दृश्येत ?'' इति आश्चर्येण पृष्टवान् कृष्णः ।

''अहो ! सः मणिः न । सत्राजितः कन्यामणिः । सत्यभामारूपी मणिः आगतः अस्ति । आवां तदारभ्य एतावत्पर्यन्तं सम्भाषणं कृतवत्यौ । सा भवतः निरीक्षां कुर्वती श्रान्ता सती प्रतिगतवती । तस्याः प्रेषणार्थम् आगता अहम् अत्र भवन्तं दृष्टवती'' इति उक्तवती रुक्मिणी ।

कृष्णः शिरः चालयन् उक्तवान् – ''एषः वा विषयः ! अस्माकं गृहस्य विघ्नेश्वरं द्रष्टुं इच्छन्ती सा अत्र आगता स्यात् । सा मया न दृष्टा एव खलु'' इति ।

तदा रुक्मिणी उक्तवती – ''अहं न जाने – सा विघ्नेश्वरं द्रष्टुम् आगता, उत भवतः दृष्टिगोचरतां प्राप्तुम् आगता इति । परन्तु अहम् एतावत् निश्चयेन वक्तुं शक्नोमि यत् तस्याः नेत्रे भवतः अन्वेषणे एव मग्ने आस्ताम् इति'' इति ।

''एषः तु आश्चर्यस्य विषयः । अहं चिन्तितवान् आसं यत् रुक्मिणी मितभाषिणी इति । परन्तु अद्य ज्ञातं यत् सा चतुरोक्तिसम्पन्ना इति'' इति आश्चर्येण कृष्णः उक्तवान् ।

– *(अनुवर्तते)*





# विवेकः उदितः

रामश्यामौ उभौ अपि सहोदरौ, ग्रामवासिनौ च । कदाचित् दायविषये तयोः कलहः आरब्धः । तदा ग्रामे अपि उभौ पक्षौ उत्पन्नौ । एकः रामस्य पक्षः, अपरः श्यामस्य पक्षः । उभयपक्षीयाः अपि स्वस्य स्वस्य पक्षस्य समर्थने एव आसक्ताः । अतः कलहः तीव्रतां गतः ।

अनेन चिन्तामग्नौ तौ भ्रातरौ किंकर्तव्यतामूढौ जातौ । तस्मिन् एव समये कश्चन पशुवाणिज्यघटकः तं ग्रामम् आगतः । सः तौ उक्तवान् – ''अहं पशूनां वाणिज्यस्य व्याजेन बहुत्र अटितवान् । इतः क्रोशदूरे नागाटः इति कश्चन ग्रामः अस्ति । तत्र धर्मवीरनामकः समस्यापरिहारकः कश्चन निवसति'' इति ।

एतत् श्रुत्वा रामश्यामौ नागाटग्रामं गतवन्तौ । ग्रामस्य आरम्भे एव कश्चन कृषीवलः दृष्टः । रामश्यामौ तम् उक्तवन्तौ – ''आवां धर्मवीरं द्रष्टुम् आगतौ । कृपया तस्य निवासः कुत्र इति वदतु'' इति ।

तयोः वचनस्य श्रवणेन सः कृषीवलः आश्चर्यचकितः सन् – ''किं भवन्तौ तं बधिरं द्रष्टुम् आगतौ ? अनेनैव मार्गेण अग्रे गच्छताम्'' इति वदन् अग्रे गतः ।

कृषिकस्य कथनेन तौ स्तब्धौ अभवताम् । किञ्चिद्दूरं गत्वा तौ मार्गे स्थितां काञ्चन महिलां दृष्ट्वा तामपि पृष्टवन्तौ – ''धर्मवीरस्य निवासः कुत्र ?'' इति ।

''अन्धस्य धर्मवीरस्य गृहं वा ? तत् तु पुरतः दृश्यमानस्य नारिकेलवृक्षस्य पार्श्वे स्थिते मार्गे अस्ति । तदर्थं भवद्भ्याम् एतेन एव मार्गेण अग्रे गन्तव्यम्'' इति वदन्ती एव सा अग्रे गतवती ।

किञ्चित् अग्रे गत्वा तौ अन्यां महिलां तमेव प्रश्नं पृष्टवन्तौ ।

सा एतौ विस्मयेन पश्यन्ती अवदत् – ''सः मूकः धर्मवीरः किं कर्तुं शक्नोति ? अस्तु ।



पुरतः दृश्यमानस्य देवीमन्दिरस्य पार्श्वे एव तस्य गृहम्'' इति उक्त्वा गतवती ।

मार्गे मिलितानां त्रयाणाम् अपि वचनं श्रुत्वा आश्चर्यचकितौ तौ धर्मवीरस्य गृहं गत्वा तम् आहूतवन्तौ ।

''कः ?'' इति पृच्छन् एव कश्चित् वृद्धः बहिः आगतः ।

''धर्मवीरं द्रष्टुम् आगतौ आवाम्'' इति तौ उक्तवन्तौ ।

''अहमेव धर्मवीरः । वदन्तु । किम् आवश्यकम् ?'' इति तेन पृष्टम् ।

भ्रातरौ तम् आश्चर्यपूर्णया दृष्ट्या पश्यन्तौ स्थितवन्तौ ।

ततः रामः आश्चर्यभावं निगृह्य तं वृद्धम् उक्तवान् – ''मार्गे लब्धः कश्चन कृषिकः भवन्तं बधिरम् उक्तवान्'' इति ।

''स्यात् नाम तथा । यतः ग्रामीणाः मां कथयन्ति यत् तडागस्य निर्माणं मया कारणीयम् इति । एतत् तु मया न कारितम् । तेन कुपिताः ते मां बधिरं मन्यन्ते इति भावयामि'' इति धर्मवीरः उक्तवान् ।

तदा श्यामः – ''मार्गे लब्धा काचन महिला भवन्तम् अन्धम् उक्तवती'' इति उक्तवान् ।

''मम गृहस्य मृच्छदाः विनष्टाः । मम पत्नी वदति यत् नूतनैः मृच्छदैः गृहम् आच्छादनीयम् इति । तत् मया न कृतम् । अतः सा तथा उक्तवती स्यात्'' इति उक्तवान् धर्मवीरः ।

''अन्या अपि काचित् महिला भवन्तं मूकम् उक्तवती'' इति रामः उक्तवान् ।

''ग्रामे स्थिताः केचन पुरुषाः स्वपत्नीः पीडयन्ति । ताः सर्वाः मम गृहम् आगत्य मम समीपे स्वस्य पतीनां दुष्टताम् उक्तवत्यः । तान् किञ्चित् परिष्कर्तुं मम साहाय्यं प्रार्थितवत्यः

ताः । किन्तु मया तथा न कृतम् इति कारणात् मां मूकं वदन्ति ताः'' इति उक्तवान् धर्मवीरः ।

तदा तौ उभौ अपि उक्तवन्तौ – ''आवयोः प्रश्नं श्रुत्वा अन्यथा मा चिन्तयतु । कमल-नामकः कश्चन गोवाणिज्यस्य मध्यस्थः अस्माकं ग्रामम् आगतः । तेन उक्तं यत् दायविषये आरब्धं कलहं योग्यरीत्या परिहर्तुं भवान् एव समर्थः इति'' इति ।

''मया यः निर्णयः उच्यते सः सर्वदा न्याय्यः एव भवति । किन्तु स्वार्थिनः, अहङ्कारिणः, आज्ञानिनश्च तं निर्णयं न आद्रियन्ते । अहं जानामि एव यत् अस्मिन् समये तडागस्य निर्माणं न उचितम् इति । यदि इदानीं तडागः कार्येत तर्हि किमपि प्रयोजनं नास्ति । अत एव अहं मौनेन स्थितवान् । एतत् अजानानाः ते मां बधिरं कथयन्ति । मयि अन्धत्वारोपोऽपि एतादृशः निष्कारणः एव । इदानीं घर्मसमयः । एतस्मिन् काले गृहस्य मृच्छदानां परिवर्तनं न कृतं चेदपि न कापि हानिः । अतः मया मृच्छदानां परिवर्तनं न कारितम् । किन्तु अस्मिन् विषये एव मम पत्नी मयि कुपिता अस्ति । अत एव सा माम् अन्धं कथयति । मूकत्वारोपः अपि न सकारणः । काश्चन गृहिण्यः कथयन्ति इति कारणतः किम् अहं पतिपत्न्योः अन्तरङ्ग-विषये प्रवेशं कुर्याम् ? पतिपत्न्योः कलहः लोके सहजः । कस्य वा गृहे एतादृशाः लघुकलहाः न भवेयुः ? किन्तु कलहे सत्यपि पतिपत्न्योः समञ्जनम् आवश्यकं गृहे । परस्परं सन्देहदृष्ट्या व्यवहारः न भवेत् तयोः । परस्परम् आदरः दृश्येत । तयोर्मध्ये अन्यस्य कस्यचन प्रवेशः न भवेत् । अन्यस्य प्रवेशेन कलहस्य वर्धनम् एव भवेत्, न तु शान्तिः'' इति उक्तवान् धर्मवीरः ।

एतत् श्रुत्वा तौ शिरः अवनमय्य उक्तवन्तौ – ''श्रीमन् ! इदानीम् आवयोः ज्ञानोदयः अभवत् । आवाभ्यां ज्ञातं यत् दायविषये उत्पन्ना समस्या आवाभ्याम् एव परिहरणीया, तस्मिन् विषये तृतीयस्य प्रवेशः न उचितः इति । इदानीम् आवयोः विश्वासः उत्पन्नः यत् आवामेव अस्मिन् कार्ये समर्थौ स्वः इति'' इति ।

एवम् उक्त्वा तौ सहोदरौ स्वग्रामं प्रतिनिवृत्तौ ।





# भूस्वामिनः तडागः

हयग्रीवनामकः कश्चन ग्रामः आसीत् । तत्र लोकनाथः नाम कश्चन आढ्यः कृषिकः वसति स्म । तस्मिन् ग्रामे तादृशः कृषिकः सः एकः एव आसीत्, यश्च स्वस्य कृषिभूमेः स्वामित्वं स्वयं वहति । सः तस्य ग्रामस्य आधारभूतः अपि आसीत् । ग्रामे यस्यकस्यचिदपि साहाय्यस्य आवश्यकता यदा भवति तदा स्वयम् अग्रे गच्छति स्म सः । स्वस्य समीपे स्थितेन धनेन दरिद्राणां आवश्यकतां पूरयति स्म सः । ग्रामे सर्वे जनाः प्रतिदिनं तस्य नाम कृतज्ञतापूर्वकं स्मरन्ति स्म ।

गच्छता कालेन ग्रामीणाः सर्वे तस्य वास्तविकं नाम विस्मृत्य 'भूस्वामिन्' इत्येव सम्बोधनम् आरब्धवन्तः ।

गृहे एकाकी आसीत् सः । तस्य बान्धवाः आश्रितजनाः वा न आसन् ।

हयग्रीवग्रामः चित्रापुरसंस्थानस्य कश्चन ग्रामः । तस्य संस्थानस्य कश्चन भूस्वामी आसीत् एव । स्वस्य आधीन्ये स्थिते ग्रामे अन्यः कश्चन भूस्वामित्वेन प्रसिद्धः जातः अस्ति इति वार्ता तस्य भूस्वामिनः कर्णपथम् आगता । अतः सः स्वसचिवम् आज्ञापितवान् यत् एतद्विषये सर्वं विचार्य मां वदतु इति ।

तदा सचिवः अवदत् - ''श्रीमन् ! कमपि पुरुषम् उद्दिश्य भगवन् इति सम्बोधनमात्रेण कोऽपि स्वयं भगवान् भवितुं न अर्हति । लोकनाथः दानशीलः, परोपकारी च अस्ति इति कारणतः जनाः प्रीत्या तं 'भूस्वामिन्' इति सम्बोधितवन्तः स्युः । अनेन भवतः कापि हानिः अपयशो वा न । अहम् अस्मिन् विषये पूर्वमेव विवरणं प्राप्तवान् अस्मि । पूर्वजैः सम्पादितं प्रभूतं धनं तस्य समीपे अस्ति । तस्य कोऽपि बन्धुरपि नास्ति । अविवाहितश्चापि सः । अतः अविचिन्त्य

दानादिनिमित्तं प्रभूतं धनं व्ययीकरोति सः । किम् एतावता एव सः भूस्वामी भवेत् ? भूस्वामित्वं वंशपारम्पर्येण प्राप्यते । यौवनकालः तस्य । अतः उत्साहयुक्तः सन् सः अधिकदानादिकं कुर्वन् अस्ति । यदा सः विवाहितः भविष्यति तदा एतत् सर्वं समाप्तं भविष्यति । अतः क्षुल्लके एतस्मिन् विषये तावत् गभीरचिन्तनं न आवश्यकम्'' इति ।

सचिवस्य वचनं श्रुतवान् भूस्वामी मन्दहासं प्रकटितवान्, किन्तु किमपि न उक्तवान् ।

तेषु एव दिनेषु हयग्रीवग्रामस्य ग्रामाधिकारी अकस्मात् मृतः । नूतनग्रामाधिकारिणः नियुक्तिः करणीया आसीत् ।



अतः भूस्वामी स्वसचिवम् आहूय उक्तवान् - ''इतः परं मम संस्थाने जनाः माम् एकम् एव उद्दिश्य 'भूस्वामि'पदेन व्यवहरेयुः । तदर्थम् एषः योग्यः अवसरः । मृतस्य ग्रामाधिकारिणः अन्यः कोऽपि बन्धुः नास्ति । अतः इदानीं सर्वेषाम् आदरपात्रं लोकनाथमेव ग्रामाधिकारिपदे नियोजयाम । तस्मात् इतः परं कोऽपि तं भूस्वामी इति न कथयेत् । अपि च यः करः तस्मात् ग्रामात् अस्माभिः प्राप्तव्यः तत् सर्वं तेन एव सङ्गृह्य अस्मभ्यं समर्पणीयं भविष्यति । तस्मात् अस्मदधीनता अपि ख्यापिता भविष्यति तस्य'' इति ।

भूस्वामिनः कथनानुसारेण लोकनाथम् एव ग्रामाधिकारिपदे नियोजितवान् सचिवः । एतावता लोकनाथस्तु ग्रामीणानां प्रीतिपात्रं सञ्जातः आसीत् । अतः ग्रामाधिकारिपदे स्थितम् अपि तं जनास्तु 'भूस्वामिवर्य !' इत्येव सम्बोधयन्ति स्म । एतं विषयं सचिवः जानन् अपि भूस्वामिनं न उक्तवान् एव ।

ततः एकं वर्षम् अतीतम् । हयग्रीवग्रामस्य ग्रामाधिकारिणा जनेभ्यः करः सङ्ग्रहणीयः आसीत् । किन्तु जनानां दारिद्र्यं दृष्ट्वा विषण्णः लोकनाथः जनेभ्यः करं न सङ्गृहीतवान् एव । सः स्वस्यैव अष्टशतं रूप्यकाणि दत्त्वा ग्रामसेवकम् उक्तवान् यत् चित्रापुरं गत्वा एतत् धनं वित्तकोषे पूरयित्वा आगच्छतु इति । ग्रामसेवकः धनं स्वीकृत्य चित्रापुरं प्रति गतवान् ।

सर्वेभ्यः ग्रामेभ्यः अपि करं सङ्गृह्य आगतवन्तः आसन् बहवः ग्रामसेवकाः । अतः वित्तकोषस्य अधिकारिणः पुरतः धनं दातुम् इच्छतां पङ्क्तिः एव आसीत् । तस्मात् हयग्रीवग्रामीयः ग्रामसेवकः धनं पूरयितुं समयं निरीक्षमाणः तत्रैव उपविष्टः ।



तावति काले भूस्वामिनः सचिवः तस्यां दिशि आगतः । वित्तकोषस्य पुरतः उपविष्टं हयग्रीवग्रामीयं ग्रामसेवकं दृष्ट्वा तेन सह सम्भाषमाणः सः ज्ञातवान् यत् एषः हयग्रीव-ग्रामात् आगतः इति । तदा तेन पृष्टम् – ''करसङ्ग्रहणद्वारा कियत् प्राप्तम् ?'' इति ।

''स्वामिन् ! अष्टशतं रूप्यकाणि आनीत-वान् अस्मि । अस्मद्ग्रामतः कररूपेण यावत् दातव्यं तावत् अपि आनीतम् अस्ति मया'' इति ग्रामसेवकेन उक्तम् ।

''एवम् ! समग्रं करधनम् आनीतं भवता ! भवतः ग्रामाधिकारी चतुरः, बुद्धिमान् च । इतः पूर्वं कोऽपि ग्रामाधिकारी एवं समग्रं करधनम् वित्तकोषे न पूरितवान् । भवतः ग्रामाधिकारिणः कार्यदक्षतां दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि । भवता आनीतं धनम् अगणयित्वा अत्रत्यः कोऽपि अधिकारी स्वीकृतिपत्रं न यच्छति । समर्थेन ग्रामाधि-कारिणा प्रेषितः ग्रामसेवकः भवान् । भवतः विषये आदरप्रदर्शनं मम कर्तव्यम्'' इति वदन् सः सचिवः अष्टशतरूप्यकाणां प्राप्तिपत्रं दापितवान् ।

किन्तु एतदन्तरे कश्चन दोषः संवृतः । सचिवेन चिन्तितं – 'सेवकः धनं पूरितवान् अस्ति । स्वीकृतिपत्रस्य प्राप्तिं निरीक्षमाणः अस्ति' इति । वित्तकोषस्य अधिकारिणा चिन्तितं यत् धनं सचिवेन प्राप्तम् अस्ति इति । अत एव सः सचिवस्य कथनेन स्वीकृतिपत्रं दत्तवान् । विना वचनं प्रतिनिवृत्तः सेवकः सर्वं धनम् ग्रामाधिकारिणे दत्तवान् ।

ग्रामाधिकारी तद् धनं स्वीकृतिपत्रं च सुरक्षिततया स्थापितवान् । एकदा सः क्षेत्रात्

प्रत्यागच्छन् मार्गे दूरात् जलम् आनयन्तीः काश्चन महिलाः दृष्टवान् । तदा तस्य मनसि विचारः उत्पन्नः यत् ग्रामे शीघ्रातिशीघ्रम् एकः तडागः निर्मातव्यः, तेन ग्रामस्य जलाभावः तदर्थं महिलानां दूरगमनं चापि निवार्यते इति ।

अचिरादेव सः जलस्य अन्वेषणे निपुणान् आनाय्य परीक्षां कारितवान् । तदा ज्ञातं यत् जलमूलं तदीये क्षेत्रे एव अस्ति इति । एतत् ज्ञात्वा सः तदर्थं स्वस्य एकरुपरिमितस्य क्षेत्रस्य दानं कृतवान् । ततः खननमपि आरब्धम् । खननार्थं तेन अष्टशतरूप्यकाणां व्ययः कृतः । यत् धनं सेवकेन वित्तकोषे न पूरितम् आसीत् तस्यैव व्ययः जातः आसीत् अत्र । तडागनिर्माणं समाप्तम् । जनैः 'भूस्वामिनः तडागः' इत्येव तस्य नाम कृतम् । तडागविषयः सर्वत्र प्रसृतः । चित्रापुरस्य भूस्वामिना अपि एषः विषयः ज्ञातः ।

सः सचिवम् आहूय विवरणं पृष्टवान् । अस्मिन् विषये जातायाः विचारणातः ज्ञातं यत् हयग्रीवग्रामस्य अष्टशतरूप्यकात्मकः करः वित्तकोषे न पूरितः इति । एतत् ज्ञात्वा कुपितः भूस्वामी स्वयमेव हयग्रीवग्रामं गत्वा ग्रामाधिकारिणं पृष्टवान् ।

लोकनाथः प्रवृत्तं सर्वं निवेद्य उक्तवान् - "यथाकथमपि चिन्त्यते चेदपि एषः भूस्वामिनः तडागः एव । वित्तकोषे यत् पूरणीयं तदेव धनं व्ययितं मया तडागनिर्माणाय । वयं सर्वे भवतः सेवकाः एव । भूस्वामिनः सेवकः सन् अहं एतं तडागं निर्मितवान् । अतः एतस्य नाम 'भूस्वामिनः तडागः' इति अस्ति चेत् किम् अनौचित्यम् ? अतः मयि कुपितः मा भवतु इति प्रार्थये" इति ।

ग्रामीणाः अपि कथितवन्तः - "स्वामिन्, एषः भूस्वामिनः तडागः अस्माकं महते उपयोगाय अभवत् । यदि भवान् इतोऽपि अधिकं करं दातुं वदेत् तर्हि तदपि दातुं वयं सिद्धाः एव" इति ।

भूस्वामी क्षणम् आलोच्य उक्तवान् - "यः जनैः सह मिलति, यः तेषां सुखदायी भवति, यः उदारः, यश्च सर्वदा जनानां हितचिन्तकः सन् तेभ्यः कमपि लाभः न इच्छति, यः जनानां सुखदुःखं स्वस्य इति सम्भाव्य कार्यं करोति स एव भूस्वामी । अतः भवन्तमेव अहम् भूस्वामी इति अङ्गीकरोमि" इति ।





# दानशीलता

पुरा कोसलदेशे सिद्धिस्वामी नाम कश्चन दानशीलः वसति स्म । तस्य दानगुणः सर्वत्र प्रसृतः आसीत् । यदा राज्ञः कर्णपथम् एषा वार्ता आगता तदा तेन चिन्तितं यत् एतादृशाय साहाय्यदानं पुण्यकार्यम् इति । अतः सः सिद्धिस्वामिने भोजनवस्तूनां प्रेषणम् आरब्धवान् ।

सिद्धिस्वामिनः पत्नी हंसवती । सा पत्युः अनुरूपा । स्वभोजनमपि त्यक्त्वा सा अपरान् भोजयति स्म । राज्ञा यदा प्रतिदिनं भोजनवस्तूनां प्रेषणम् आरब्धं ततः आरभ्य सा प्रतिदिनम् इतोऽप्यधिकतया अन्नदाने निरता अभवत् ।

कदाचित् कोसलानां राजा तीर्थयात्रां कुर्वन् काशीनगरं गतः । तत्र गङ्गास्नानं समाप्य जनाः आगच्छन्तः आसन् । तदा राजसेवकाः - ''काशीराजः आगतः, अपसरन्तु अपसरन्तु'' इति वदन्तः कोसलराजमपि अपसारितवन्तः ।

एतत् दृष्ट्वा कोसलराजस्य सेवकाः कुपिताः । ते कोपेन उक्तवन्तः - ''कोसलराजस्य अपमानं कर्तुं कियद् धैर्यं भवताम् ? काशीराजस्य एतावदहङ्कारः किम् ?'' इति ।

एतत् वचनं काशीराजेन श्रुतम् । सः स्वस्य अश्वं स्थगयन् कोसलराजं प्रणम्य निवेदितवान् - ''अहो, भवान् सिद्धिस्वामिनः देशस्य राजा ! एतत् अजानन्तः मम सेवकाः भवतः विषये अन्यथा आचरितवन्तः । तदर्थम् अहं क्षमां याचे'' इति ।

एतत् वाक्यं कोसलराजस्य मनसि असूयाम् अजनयत् । 'मया दीयमानं भोजनवस्तु स्वीकृत्य अन्नदानं करोति सः सिद्धिस्वामी । तादृशेन एतावत् यशः प्राप्तम्' इति चिन्तयन् राजा कोसलात् प्रत्यागत्य सिद्धिस्वामिने भोजनवस्तु दीयते स्म यत् तत् स्थगितवान् । सिद्धिस्वामिनः अपयशः वर्धताम् इति उद्देशेन सः तस्य गृहं प्रति अधिकाधिकान् अतिथीन् प्रेषयितुं सूचनां दत्तवान् ।

राजतः भोजनवस्तूनां यत् आगमनं आसीत् तत् स्थगितं चेदपि सिद्धिस्वामी चिन्ताम् अकुर्वन् अतिथिसत्काराय स्वस्य क्षेत्रादिसम्पत्तिं विक्रीतवान् । तदनन्तरमपि यदा अतिथिसत्कारकार्यं निर्वोढुं न शक्तः तदा सः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

अतिथिसत्कारार्थमेव अन्येभ्यः धनं सङ्ग्रहीतुम् उद्युक्तः अभवत् । तस्य दानशीलतां जानन्तः तस्मिन् विषये आदरयुक्ताः धनिकाः सन्तोषेण तस्मै धनं दत्तवन्तः । किन्तु एतदपि अल्पे एव काले अपर्याप्तं जातम् ।

एकस्मिन् दिने महता प्रयासेन किञ्चित् एव तण्डुलः प्राप्तः सिद्धिस्वामिना । परन्तु गृहे विंशतिः अतिथयः आसन् भोजनं निरीक्षमाणाः । अतः सिद्धिस्वामी चिन्तामग्नः जातः ।

तदा तस्य पत्नी हंसवती स्वस्य मङ्गलसूत्रमेव अवमोच्य पत्युः हस्ते दत्त्वा - ''भवान् चिन्तां मा करोतु । अनेन कार्यं समापयाम'' इति उक्तवती ।

ततः तस्य आभरणस्य विक्रयणेन प्राप्तेन धनेन अतिथिसत्कारः कृतः ।

तद्दिने सायं सिद्धिस्वामी 'स्वसमीपे एकं नाणकमपि नास्ति' इति ज्ञात्वा पत्न्या सह काशीयात्रां कर्तुं प्रस्थितः ।

रात्रौ कस्याञ्चित् धर्मशालायां वसतिः कृता ताभ्याम् । तत्र अन्ये त्रयः यात्रिकाः अपि आसन् । तेषु कश्चन उक्तवान् - ''वयं दूरदेशतः आगताः । एतस्मिन् देशे सिद्धिस्वामिनः आतिथ्यं स्वीकर्तुम् इच्छामः । श्वः प्रातः तत्रैव भोजनं प्राप्स्यामः'' इति । एतत् श्रुत्वा पतिपत्न्योः आश्चर्यम् अभवत् ।

ते त्रयः अपि यदा निद्रिताः तदा हंसवती पतिम् उक्तवती - ''आवाम् इदानीमेव इतः प्रस्थाय गृहं गच्छाव । एतेषाम् आगमनात् पूर्वं भोजनव्यवस्था भवेत् । अस्माकं गृहे एका पेषणी, द्वौ मुसलौ च सन्ति । तान् विक्रीय भोजनव्यवस्थां करवावं'' इति ।

तदनन्तरं तौ उभौ अपि ततः प्रस्थाय उषसि एव गृहम् आगतौ । विक्रेतुं यदा पेषणी उद्धृता तदा तस्याः अधः पूर्वजैः स्थापितं बृहत् धनपात्रं दृष्टं ताभ्याम् । अतः तद्दिने तौ न केवलं त्रयाणाम् अतिथीनाम्, अपि तु समग्रग्रामजनानामेव आतिथ्यं कृतवन्तौ ।

एषा वार्ता कोसलराजेन अपि श्रुता । तेन चिन्तितं यत् मया धनं न दीयते चेत् अपि योग्याय जनाय भगवता दीयते एव इति । पश्चात्तापेन दग्धः सः पूर्ववत् सिद्धिस्वामिनः गृहं प्रति भोजनादिवस्तूनां प्रेषणं पुनरपि आरब्धवान् ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

चित्रं - पाणिः

21

अतिथिरूपेण आगताभ्यां नरेन्द्रदेव-रवीन्द्रदेवाभ्यां सह तान्त्रिक-बन्धुः सर्पदेशस्य गुहायां विचित्राकृतिमन्तं पाशाङ्करम् आवाहयति आदित्यस्य ग्रहणाय । किन्तु तस्य शक्तिः आदित्यस्य शक्तितः न्यूना आसीत् । अतः प्रत्यागतः सः तान्त्रिकस्य पुरतः स्वस्य असफलताम् अङ्गीकरोति ।

सर्पदेशं प्राप्तवन्तः आदित्यस्य सहचराः वासाय एकं पटमण्डपं निर्मान्ति । कश्चन गणः सर्वेक्षणाय प्रेष्यते आदित्येन ।

नरेन्द्रदेवरवीन्द्रदेवयोः विषये तदनुयायिनां विषये च काचित् दृष्टिः भवतु सदापि । गुहामन्दिरं प्राप्तुं कोऽपि मार्गः अस्ति किम् इत्यपि जानन्तु ।

एषः नारीस्वरः । का स्यात् एषा ?

शिबिरे तिष्ठन् आदित्यः कस्याश्चित् नार्याः आर्तनादं शृणोति ।

आदित्यः स्वस्य शिबिरस्य पुरतः बद्धहस्तौ कौचित् वनवासिदम्पती पश्यति ।


एतौ कौ ?
महोदय ! एतौ सर्पदेशीयौ वनवासिनौ ।
सन्देहास्पदरीत्या अटन्तौ एतौ दृष्टौ अस्माभिः ।
कौ भवन्तौ ? सत्यं वदताम् ।


वदताम्, कौ भवन्तौ ?
सत्यम् उक्तं चेत् भवन्तौ मुच्येते ।
श्रीमन्, अहम् अस्मज्जातीयस्य प्रमुखस्य पुत्री । एत युवकम् अहं परिणेतुम् इच्छामि ।


राजर्षिः नागबन्धुः यथा न गृह्णीयात् तथा आवां पलायने उद्युक्तौ आस्व । आवां निर्दोषौ । कृपया आवां रक्षणीयौ तत्रभवता ।


श्रीमन् ! मम नाम आदित्यः इति । राजर्षिः तच्छिष्याः च अपरस्य आदित्यस्य अन्वेषणं कुर्वन्तः सन्ति । तम् अप्राप्नुवन्तः ते मम ग्रहणाय उद्युक्ताः । आवां पलायनप्रयत्ने आस्व ।.....


.... केनचित् गुप्तमार्गेण । तदा एते आवां गृहीतवन्तः । आवां प्राणरक्षणार्थं पलायनं कुर्वन्तौ स्वः ।


आदित्य ! ते भवन्तं किमर्थं गृहीतुम् इच्छन्ति ?
बलिदानाय । राजर्षेः गुरवे षष्टितमी बलिः अर्पणीया अस्ति अधिक-शक्तिसम्पादनाय । पितुः मुखात् मया एतत् ज्ञातम् ।


आदित्यस्य शरीरे गरुड-रेखा अस्ति । वयं च नागोपासकाः ।


भवत्या गुप्त-मार्गविषये उक्तं खलु ? तस्य आरम्भः कुतः ? समाप्तिः च कुत्र ?
मन्दिरतः तस्याः गुहायाः आरम्भः । अग्नि-कुण्डसमीपे....


मन्दिरस्य सरोवरस्य तीरे गुहामार्गस्य समाप्तिः । तत्रैव भवज्जनाः आवां गृहीतवन्तः ।


अहो, अहं कः इति इदानीं वदामि । अहं सः एव आदित्यः, यस्य च अन्वेषणे अस्ति भवतां राजर्षिः । तत्समीपं गमनाय किं भवन्तौ मार्गं वक्तुं शक्नुतः ?
अहो, भवान् एव आदित्यः नाम ! नरेन्द्रदेवस्य सहचारिणां मुखात् भवतः साहसकृत्यानां विषये अस्माभिः बहुधा श्रुतम् आसीत् ।
अनुवर्तते

# कालोऽयं मनोविनोदस्य

## समीक्रियतां चित्रम् एतत्



हा हन्त ! केऽपि इग्लीवग्लया चित्रितं कीटचित्रं छिन्नीकृतवन्तः सन्ति । तेषां योजने साहाय्यं कुर्वन्ति खलु भवन्तः ? तान् लघून् चित्रखण्डान् दृढपत्रे योजयन्तु । ततः तान् चित्रखण्डान् एकैकशः कर्तयन्तु पार्थक्येन । योग्ये स्थले तान् स्थापयितुं प्रयत्नं कुर्वन्तु । भवतां प्रयासेन इग्लीवग्लायाः चित्रं यथापूर्वं भवतु । अन्ते उपरि यत् चित्रं दत्तम् अस्ति तत् दृष्ट्वा आत्मना योजितस्य युक्तायुक्ततां परीक्षन्ताम् ।







# शिलीन्ध्रे मार्गान्वेषणम् ।

झोण्डुवन्दुः स्वस्य पितामह्याः गृहं गन्तुम् इच्छति । किन्तु पितामही निद्रामग्ना । सा तस्य आह्वानं न शृणोति । पितामह्याः गृहस्य द्वारस्य प्राप्तये शिलीन्ध्रस्य मध्ये मार्गः अङ्कितः अस्ति । किन्तु तस्य मार्गस्य अवगमने वन्दुः क्लेशम् अनुभवति । किं भवन्तः तं योग्यं मार्गम् उपदेष्टुम् अर्हन्ति ?

# अभिन्ने चित्रे के ?

रिङ्कीरिनोवायाः एतानि चित्राणि अतिरमणीयानि । यद्यपि एतानि सर्वाणि सदृशानि इति भान्ति तथापि अभिन्नाकारता तु द्वयोः एव । किं तत् उभयम् अन्विष्येयुः भवन्तः ?






# चित्रशीर्षिकास्पर्धा





उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां
किं भवन्तः प्रेषयितुं शक्नुयुः ?

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'डिसेम्बर्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**
**ग्योको नगारा**
*१०४१, अकियाबा, कियोदामाचि*
*ओरागन्, गुन्माकेन्*
**जपान् - ३७० ०५०३**

**पुरस्कृतशीर्षिका**



**अहो, स्कन्धोऽयमानन्दकरः ।**
**अयमङ्कोऽपि तोषकर एव ।**

**उत्तरं मनोविनोदस्य (पृ - ६४)**

**अभिन्ने चित्रे** - द्वितीय-चतुर्थचित्रयोः सादृश्यम् ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

CHANDAMAMA (Sanskrit) JANUARY 2003
Regd. with Registrar of Newspaper for India No. 42664/85
Registered No. TN/CPMG-867/2002
Licensed to post without prepayment No. 540/02 /
Foreign - WPP. No. 559